वेदविद्याव्रतस्नाता वदान्याः प्रियदर्शनाः ।
सुभिक्षाच्छादनगृहाः सुशय्यासनभोजनाः ३
नट-नर्तक-गन्धर्वैः पूर्णकैर्वर्धमानकैः ।
नित्योद्योगैश्च क्रीडद्भिस्तत्र स्म परिहर्षिताः
यज्ञे यज्ञे यथाकालं दक्षिणाः सोऽत्यकालयत्
द्विपा दशसहस्राख्याः प्रमदाः काञ्चनप्रभाः ५
सध्वजाः सपताकाश्च रथा हेममयास्तथा ।
यः सहस्रं सहस्राणि कन्या हेमविभूषिताः
धूर्युजाश्वगजारूढाः सगृहक्षेत्रगोशताः ।
शतं शतसहस्राणि स्वर्णमाली महात्मनाम्
गवां सहस्रानुचरान् दक्षिणामत्यकालयत् ।
हेमशृंग्यो रौप्यखुराः सवत्साः कांस्यदोहनाः
दासीदासखरोष्ट्राश्च प्रादादाजाविकं बहु ।
रत्नानां विविधानां च विविधांश्चान्नपर्वतान्
तस्मिन् संविततें यज्ञे दक्षिणामत्यकालयत् ।
तत्रास्य गाथा गायन्ति ये पुराणविदो जनाः
अङ्गस्य यजमानस्य स्वधर्माधिगताः शुभाः ।
गुणोत्तरास्तु क्रतवस्तस्यासन्सार्वकामिकाः‡
स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया ।
पुत्रात् पुण्यतरस्तुभ्यं मा पुत्रमनुतप्यथाः ।
अयज्वानमदाक्षिण्यमभिश्वैत्येति व्याहरन्

इति श्रीमहाभारते द्रोणपर्वणि अभिमन्युवधपर्वणि षोडशराजकीये
सप्तपञ्चाशत्तमोऽध्यायः ॥ ५७ ॥

## ५८

नारद उवाच ।
शिबिमौशीनरं चापि मृतं सृञ्जय शुश्रुम ।
य इमां पृथिवीं सर्वां चर्मवत् पर्यवेष्टयत् ॥ १
साद्रिद्वीपार्णववनां
रथघोषेण नादयन् ।
स शिबिर्वै रिपून्नित्यं
मुख्यान्निघ्नन् सपत्नजित् ॥ २
तेन यज्ञैर्बहुविधै-
रिष्टं पर्याप्तदक्षिणैः ।
स राजा वीर्यवान् धीमा-
नवाप्य वसु पुष्कलम् ॥ ३
सर्वमूर्धाभिषिक्तानां संमतः सोऽभवद्युधि ।
अयजच्चाश्वमेधैर्यो विजित्य पृथिवीमिमाम् ४
निरर्गलैर्बहुफलैर्निष्ककोटिसहस्रदः ।
हस्त्यश्वपशुभिर्धान्यैर्मृगैर्गोजाविभिस्तथा ५
विविधां पृथिवीं पुण्यां
शिबिर्ब्राह्मणसात् करोत् ।
यावत्यो वर्षतो धारा
यावत्यो दिवि तारकाः ॥ ६
यावत्यः सिकता गाङ्ग्यो यावन्मेरोर्महोपलाः
उदन्वति च यावन्ति रत्नानि प्राणिनोऽपि च
तावतीरददद्गा वै शिबिरौशीनरोऽध्वरे ७
नो यन्तारं धुरस्तस्य कञ्चिदन्यं प्रजापतिः ।
भूतं भव्यं भवन्तं वा नाध्यगच्छन्नरोत्तमम् ८
तस्यासन् विविधा यज्ञाः
सर्वकामैः समन्विताः ॥ ९
हेमयूपासनगृहा हेमप्राकारतोरणाः ।
शुचि स्वाद्वन्नपानं च ब्राह्मणाः प्रयुतायुताः॥
नानाभक्ष्यैः प्रियकथाः पयोदधिमहाह्रदाः ।
तस्यासन् यज्ञवाटेषु नद्यः शुभ्रान्नपर्वताः ११

---

पूर्णकैः स्वर्णचूडैः डाकुलता इति दाक्षिणात्यप्रसिद्धैः । वर्धमानकैः आरार्तिकदृ तैः ॥ ४॥ धूर्युजा रथा ॥ ७ ॥ इति श्रीमहाभारते द्रोणपर्वणि टीकायां सप्तपञ्चाशत्तमोऽध्यायः ५७
‡ 'अङ्गस्य यजमानस्य अपि त्रिष्टुपदे वयम् । अमायदिन्द्रः सोमेन दक्षिणाभिर्द्विजातयः । देवमानुषगन्धर्वाश्चात्यरोचन्त दक्षिणाः ।' इति पाठान्तरम् ।

५८

शिबिमिति । पर्यवेष्टयत् स्वाधीनामकरोत् ॥ १ ॥ त्रैकालिकेषु राजसु तदन्यं राजानं तस्य शिबेः धुरः कार्यभारस्य यन्तारं वोढारं प्रजापतिः स्रष्टा स्वसृष्टौ नाध्यगच्छत् ॥ ८ ॥

पिबत स्नात खादध्वमिति यद्रोचते जनाः ।
यस्मै प्रादाद्वरं रुद्रस्तुष्टः पुण्येन कर्मणा १२
अक्षयं ददतो वित्तं श्रद्धा कीर्तिस्तथा क्रियाः।
यथोक्तमेव भूतानां प्रियत्वं स्वर्गमुत्तमम् ॥१३
एतान् लब्ध्वा वरानिष्टान्
शिबिः काले दिवं गतः ।
स चेन्ममार सृञ्जय
चतुर्भद्रतरस्त्वया ॥ १४
पुत्रात् पुण्यतरस्तुभ्यं मा पुत्रमनुतप्यथाः ।
अयज्वानमदाक्षिण्यमभिश्वैत्येति व्याहरन् ॥

इति श्रीमहाभारते द्रोणपर्वणि अभिमन्युवधपर्वणि षोडशराजकीये अष्टपञ्चाशत्तमोऽध्यायः ॥ ५८ ॥

## ५९

नारद उवाच ।
रामं दाशरथिं चैव मृतं सृञ्जय शुश्रुम ।
यं प्रजा अन्वमोदन्त पिता पुत्रानिवौरसान्॥
असंख्येया गुणा यस्मिन्नासन्नमिततेजसि ।
यश्चतुर्दश वर्षाणि निदेशात् पितुरच्युतः ॥ २
वने वनितया सार्धमवसल्लक्ष्मणाग्रजः ।
जघान च जनस्थाने राक्षसान् मनुजर्षभः ॥३
तपस्विनां रक्षणार्थं सहस्राणि चतुर्दश ।
तत्रैव वसतस्तस्य रावणो नाम राक्षसः ॥ ४
जहार भार्यां वैदेहीं संमोह्यैनं सहानुजम् ।
तमागस्कारिणं रामः पौलस्त्यमजितं परैः ॥
जघान समरे क्रुद्धः पुरेव त्र्यम्बकोऽन्धकम्
सुरासुरैरवध्यं तं देवब्राह्मणकण्टकम् ॥ ६
जघान स महाबाहुः पौलस्त्यं सगणं रणे ।
स प्रजानुग्रहं कृत्वा त्रिदशैरभिपूजितः ॥ ७
व्याप्य कृत्स्नं जगत्कीर्त्या सुरर्षिगणसेवितः।
स प्राप्य विविधं राज्यं सर्वभूतानुकम्पकः ॥
आजहार महायज्ञं प्रजा धर्मेण पालयन् ।
निरर्गलं सजारूथ्यमश्वमेधं च तं विभुः ॥ ९
आजहार सुरेशस्य हविषा मुदमाहरत् ।
अन्यैश्च विविधैर्यज्ञैरीजे बहुगुणैर्नृपः ॥ १०
क्षुत्पिपासेऽजयद्रामः सर्वरोगांश्च देहिनाम्।
सततं गुणसंपन्नो दीप्यमानः स्वतेजसा ॥ ११
अति सर्वाणि भूतानि रामो दाशरथिर्बभौ ।
ऋषीणां देवतानां च मानुषाणां च सर्वशः।
पृथिव्यां सहवासोऽभूद्रामे राज्यं प्रशासति॥
नाहीयत तदा प्राणः प्राणिनां न तदन्यथा ।
प्राणोऽपानः समानश्च रामे राज्यं प्रशासति
पर्यदीप्यन्त तेजांसि तदनर्थाश्च नाभवन् १४
दीर्घायुषः प्रजाः सर्वा युवा न म्रियते तदा ।
वेदैश्चतुर्भिः सुप्रीताः प्राप्नुवन्ति दिवौकसः ॥
हव्यं कव्यं च विविधं निष्पूर्तं हुतमेव च ।
अदंशमशका देशा नष्टव्यालसरीसृपाः ॥१६
नाप्सु प्राणभृतां मृत्युर्नाकाले ज्वलनोऽदहत्
अधर्मरुचयो लुब्धा मूर्खा वा नाभवंस्तदा ॥
शिष्टेष्टप्राज्ञकर्माणः सर्वे वर्णास्तदाऽभवन्।
स्वधां पूजां च रक्षोभिर्जनस्थाने प्रणाशिताम्
प्रादाद्धित्वा रक्षांसि पितृदेवेभ्य ईश्वरः ।
सहस्रपुत्राः पुरुषा दशवर्षशतायुषः ॥ १९
न च ज्येष्ठाः कनिष्ठेभ्य-
स्तदा *श्राद्धान्यकारयन्।
श्यामो युवा लोहिताक्षो
मत्तमातङ्गविक्रमः ॥ २०
आजानुबाहुः सुभुजः सिंहस्कन्धो महाबलः ।
दशवर्षसहस्राणि दशवर्षशतानि च ॥ २१

---

ददतो राज्ञो वित्तादिकमक्षयमस्त्विति रुद्रो वरं ददाविति सम्बन्धः ॥ १३ ॥ इति श्रीमहाभारते द्रोणपर्वणि टीकायामष्टपञ्चाशत्तमोऽध्यायः ॥ ५८ ॥

५९

**राममिति** । प्रजानां पुत्रवत्प्रियोऽभूदित्यर्थः ॥ १ ॥

पृथिव्यां मानुषाणां प्रत्यक्षा देवादयो विचरन्ति पुण्यातिशयात् ॥ १२ ॥ प्राणो बलम् । प्राणादयश्च तदन्यथा प्राणाद्यन्यथा भावेन नाहीयन्त । अतिश्वासा निश्वासादयो रोगा नाभवन्नित्यर्थः ॥१३ ॥ निष्पूर्तं तटाकारामादि । हुतं इष्टम् ॥ १६ ॥ * श्राद्धानि कुर्वते इति पाठः ।

सर्वभूतमनःकान्तो रामो राज्यमकारयत्।
रामो रामो राम इति प्रजानामभवत् कथा॥
रामाद्रामं जगद्भूद्रामे राज्यं प्रशासति ।
चतुर्विधाः प्रजा रामः स्वर्गं नीत्वा दिवं गतः
आत्मानं संप्रतिष्ठाप्य राजवंशमिहाष्टधा ।
स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया २४
पुत्रात् पुण्यतरस्तुभ्यं मा पुत्रमनुतप्यथाः ।
अयज्वानमदाक्षिण्यमभिश्वैत्येति व्याहरन्॥

इति श्रीमहाभारते द्रोणपर्वणि अभिमन्युवधपर्वणि षोडशराजकीये
एकोनषष्टितमोऽध्यायः॥ ५९॥

## ६०

नारद उवाच ।
भगीरथं च राजानं मृतं सृञ्जय शुश्रुम।
येन भागीरथी गङ्गा चयनैः काञ्चनैश्चिता॥
यः सहस्रं सहस्राणां कन्या हेमविभूषिताः।
राज्ञश्च राजपुत्रांश्च ब्राह्मणेभ्यो ह्यमन्यत ।
सर्वा रथगताः कन्या रथाः सर्वे चतुर्युजः॥
रथे रथे शतं नागाः सर्वे वै हेममालिनः॥ ३
सहस्रमश्वाश्चैकैकं गजानां पृष्ठतोऽन्वयुः ।
अश्वे अश्वे शतं गावो गवां पश्चादजाविकम्॥
तेनाक्रान्ता जलौघेन दक्षिणा भूयसीर्ददत्।
उपह्वरेऽतिव्यथिता तस्यांके निषसाद ह॥ ५
तथा भागीरथी गङ्गा उर्वशी चाभवत् पुरा।
दुहितृत्वं गता राज्ञः पुत्रत्वमगमत् तदा॥ ६
तां तु गाथां जगुः प्रीता गन्धर्वाः सूर्यवर्चसः
पितृदेवमनुष्याणां शृण्वतां वल्गुवादिनः॥७
भगीरथं यजमानमैक्ष्वाकुं भूरिदक्षिणम् ।
गङ्गा समुद्रगा देवी वव्रे पितरमीश्वरम्॥ ८
तस्य सेन्द्रैः सुरगणैर्देवैर्यज्ञः स्वलङ्कृतः ।
सम्यक्परिगृहीतश्च शान्तविघ्नो निरामयः॥
यो य इच्छेत विप्रो वै यत्र यत्रात्मनः प्रियम्
भगीरथस्तदा प्रीतस्तत्र तत्राददद्वशी॥ १०
नादेयं ब्राह्मणस्यासीद्यस्य यत्स्यात् प्रियं धनं
सोऽपि विप्रप्रसादेन ब्रह्मलोकं गतो नृपः॥
येन यातौ मखमुखौ दिशाशाविहपादपाः।
तेनावस्थातुमिच्छन्ति तं गत्वा राजमीश्वरम्
स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया।
पुत्रात् पुण्यतरस्तुभ्यं मा पुत्रमनुतप्यथाः॥ १२
अयज्वानमदाक्षिण्यमभिश्वैत्येति व्याहरन्॥

---

राममभिरामम् ॥ २३ ॥ इति श्रीमहाभारते द्रोणपर्वणि टीकायामेकोनषष्टितमोऽध्यायः ॥ ५९ ॥

६०

**भगीरथमिति**। चयनैः काञ्चनैः चिता स्वर्णेष्टकमयैः क्रत्वर्थस्थंडिलैर्व्याप्ता चयनैरिष्टकासोपानैर्वा, कूलद्वये उद्गमात्संगमपर्यंतं निचितेति वाऽर्थः ॥ १ ॥ राज्ञश्च राजपुत्रांश्चातिक्रम्येति शेषः। ब्राह्मणेभ्यः अमन्यत दत्तवान्॥ २ ॥ येन हेतुना उपह्वरे समीपे भूयसीर्दक्षिणा ददत् राजा आस्ते तेन हेतुना गङ्गा जनौघभारेण आक्रान्ता वेत्रयष्टिवत्तीरप्रदेशे नतिं प्राप्ता सती अतिव्यथिताऽतस्तस्याङ्के निषसाद ह दक्षिणाभारेण तीरप्रदेशेऽवनते प्रवाहाम्बु राज्ञोऽङ्कपर्यन्तमागतामित्यर्थः ॥ ५ ॥ तथा तेन प्रकारेण गङ्गा ऊरुं भारमश्नुत इति वा राज्ञ ऊरुमश्नुते इति वा योगात् उर्वशी अभवत्। द्वितीयपक्षे पृषोदरादित्वादादेर्ह्रस्वत्वम्। पुत्रत्वं नरकात्राणकर्तृत्वम् ॥ ६ ॥ वशी योगी योगप्रभावात् यो यत्र देशे यत् इच्छेत् स तत्र प्राप्नुयादित्यर्थः ॥ १० ॥ **येनेति**। पादपा मरीचिपा ऋषयः येन कारणेन यदर्थं यातौ उदितौ मखौ कर्मयज्ञयोगयज्ञौ मुखे प्रातिद्वारभूतौ ययोस्तौ मखमुखौ सूर्यतदन्तर्यामिणौ । अवस्थातुमुपस्थातुमिच्छन्ति तेनैव प्रयोजनेन तं भगीरथमवस्थातुमिच्छन्ति तत्र हेतुद्वयम्। गत्वा राजमितीश्वरमिति च गच्छतीति गत्वा त्रिजगती तस्यां राजत इति गत्वा राजः सूर्यः नृपश्च ईश्वरः ईशनशीलस्तदन्तर्यामी नृपश्च। अयं भावः—यत्सूर्यदर्शनेन फलं पापनाशादि तदस्य दर्शनेन भवति यच्च सूर्यान्तर्यामिणः उपासनेन फलं सत्यसङ्कल्पत्वादि तदस्योपासनेन भवतीति मरीचिपादीनामयमेव द्रष्टव्य उपास्यश्च जात इति ॥ १२ ॥

इति श्रीमहाभारते द्रोणपर्वणि अभिमन्युवधपर्वणि षोडशराजकीये षष्टितमोऽध्यायः ॥ ६० ॥

## ६१

नारद उवाच ।

दिलीपं चेदैलविलं मृतं सृञ्जय शुश्रुम ।
यस्य यज्ञशतेष्वासन् प्रयुतायुतशो द्विजाः ।
तन्त्रज्ञानार्थसंपन्ना यज्वानः पुत्रपौत्रिणः ॥ १
य इमां वसुसंपूर्णां वसुधां वसुधाधिपः ।
ईजानो वितते यज्ञे ब्राह्मणेभ्यो ह्यमन्यत ॥ २
दिलीपस्य तु यज्ञेषु कृतः पन्था हिरण्मयः ।
तं धर्म इव कुर्वाणाः सेन्द्रा देवाः समागमन् ।
सहस्रं यत्र मातङ्गा गच्छन्ति पर्वतोपमाः ।
सौवर्णं चाभवत् सर्वं सदः परमभास्वरम् ॥
रसानां चाभवन्कुल्या
भक्ष्याणां चापि पर्वताः ।
सहस्रव्यामा नृपते
यूपाश्चासान्हिरण्मयाः ॥ ५
चषालं प्रचषालं च यस्य यूपे हिरण्मये ।
नृत्यन्तेऽप्सरसस्तस्य षट्सहस्राणि सप्तधा ॥
यत्र वीणां वादयति
प्रीत्या विश्वावसुः स्वयम् ।
सर्वभूतान्यमन्यन्त
राजानं सत्यशीलिनम् ॥ ७
रागखाण्डवभोज्यैश्च मत्ताः पथिषु शेरते ।
तदेतदद्भुतं मन्ये अन्यैर्न सदृशं नृपैः ॥ ८
यदप्सु युध्यमानस्य चक्रे न परिपेततुः ।
राजानं दृढधन्वानं दिलीपं सत्यवादिनम् ॥
येऽपश्यन्भूरिदाक्षिण्यं तेऽपि स्वर्गजितो नराः
पंच शब्दा न जीर्यन्ति खट्वांगस्य निवेशने॥
स्वाध्यायघोषो ज्याघोषःपिबताश्नीत खादत
स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया॥११
पुत्रात्पुण्यतरस्तुभ्यं मा पुत्रमनुतप्यथाः ।
अयज्वानमदाक्षिण्यमभिश्वैत्येति व्याहरन् ॥

इति श्रीमहाभारते द्रोणपर्वणि अभिमन्युवधपर्वणि षोडशराजकीये एकषष्टितमोऽध्यायः ॥ ६१ ॥

## ६२

नारद उवाच ।

मान्धाता चेद्यौवनाश्वो मृतः सृञ्जय शुश्रुम
देवासुरमनुष्याणां त्रैलोक्यविजयी नृपः ॥ १
यं देवावश्विनौ गर्भात् पितुः पूर्वं चकर्षतुः ।
मृगयां विचरन् राजा तृषितः क्लान्तवाहनः
धूमं दृष्ट्वाऽगमत् सत्रं पृषदाज्यमवाप सः ।
तं दृष्ट्वा युवनाश्वस्य जठरे सूनुतां गतम् ॥ ३
गर्भाद्धि जन्हतुर्देवावश्विनौ भिषजां वरौ ।
तं दृष्ट्वा पितुरुत्संगे शयानं देववर्चसम् ॥ ४

---

इति श्रीमहाभारते द्रोणपर्वणि टीकायां षाष्टितमोऽध्यायः ॥ ६० ॥

६१

**दिलीपमिति** ॥१॥ तंत्रं क्रिया सार्धश्लोकः ॥ २ ॥ पन्था हिरण्मयः हिरण्मय्यः स्रुचो भवन्तीति विधिमार्गस्तत आरभ्य प्रवृत्त इत्यर्थः । धर्मे निमित्ते पुण्योःपत्त्यर्थमिव देवास्तमलं कुर्वन्तीत्यर्थः ॥ ३ ॥ रागखाण्डवं गुडोदनं पर्पटिकेति वैदर्भाः ॥८॥ अप्सु न परिपेततुः न ममज्जतुः ॥९॥ खट्वांग इति ऐलविलस्य दिलीपस्यैव नामान्तरम् ॥ १० ॥ इति श्रीमहाभारते द्रोणपर्वणि टीकायां एकषाष्टितमोऽध्यायः ॥ ६१ ॥

६२

**मान्धातेति** ॥ १ ॥

अन्योन्यमब्रुवन् देवाः कममयं धास्यतीति वै ।
मामेवायं धयत्वग्रे इति ह स्माह वासवः ॥
ततोऽङ्गुलिभ्यो हीन्द्रस्य
प्राद्रुरासीत् पयोऽमृतम् ।
मां धास्यतीति कारुण्या-
द्यदिन्द्रो ह्यन्वकम्पयत् ॥ ६
तस्मात्तु मान्धातेत्येवं नाम तस्याद्भुतं कृतम्
ततस्तु धारां पयसो घृतस्य च महात्मनः ॥
तस्यास्ये यौवनाश्वस्य
पाणिरिन्द्रस्य चास्रवत् ।
अपिबत् पाणिमिन्द्रस्य
स चाप्यह्नाऽभ्यवर्धत ॥
सोऽभवद्द्वादशसमो द्वादशाहेन वीर्यवान् ।
इमां च पृथिवीं कृत्स्नामेकाह्ना स व्यजीजयत्
धर्मात्मा धृतिमान् वीरः
सत्यसन्धो जितेन्द्रियः ।
जनमेजयं सुधन्वानं
गयं पूरुं बृहद्रथम् ॥ १०
असितं च नृगं चैव मान्धाता मनुजोऽजयत्
उदेति च यतः सूर्यो यत्र च प्रतितिष्ठति ॥
तत् सर्वं यौवनाश्वस्य मान्धातुः क्षेत्रमुच्यते ।
सोऽश्वमेधशतैरिष्ट्वा राजसूयशतेन च ॥ १२
अददद्रोहितान्मत्स्यान्
ब्राह्मणेभ्यो विशांपते ।
हैरण्यान् योजनोत्सेधा-
नायतान् शतयोजनम् ॥ १३
बहुप्रकारान् सुस्वादून् भक्ष्यभोज्यान्नपर्वतान्
अतिरिक्तं ब्राह्मणेभ्यो भुञ्जानो हीयते जनः ॥
भक्ष्यान्नपाननिचयाः शुशुभुस्त्वन्नपर्वताः ।
घृतह्रदा सूपपङ्का दधिफेना गुडोदकाः ॥ १५
रुरुधुः पर्वतान्नद्यो मधुक्षीरवहाः शुभाः ।
देवासुरा नरा यक्षा गन्धर्वोरगपक्षिणः ॥
विप्रास्तत्रागताश्चासन् वेदवेदाङ्गपारगाः ।
ब्राह्मणा ऋषयश्चापि नासंस्तत्राविपश्चितः ॥
समुद्रान्तां वसुमतीं वसुपूर्णां तु सर्वतः ।
स तां ब्राह्मणसात्कृत्वा जगामास्तं तदा नृपः
गतः पुण्यकृतां लोकान्
व्याप्य स्वयशसा दिशः ।
स चेन्ममार सृञ्जय
चतुर्भद्रतरस्त्वया ॥ १६
पुत्रात् पुण्यतरस्तुभ्यं मा पुत्रमनुतप्यथाः ।
अयज्वानमदाक्षिण्यमभिश्वैत्येति व्याहरन् ॥

इति श्रीमहाभारते द्रोणपर्वणि अभिमन्युवधपर्वणि षोडशराजकीये
द्विषष्टितमोऽध्यायः ॥ ६२ ॥

## ६३

नारद उवाच ।
ययातिं नाहुषं चैव मृतं सृञ्जय शुश्रुम ।
राजसूयशतैरिष्ट्वा सोऽश्वमेधशतेन च ॥ १
पुण्डरीकसहस्रेण वाजपेयशतैस्तथा ।
अतिरात्रसहस्रेण चातुर्मास्यैश्च कामतः ।
अग्निष्टोमैश्च विविधैः सत्रैश्च प्राज्यदक्षिणैः २
अब्राह्मणानां यद्वित्तं पृथिव्यामस्ति किंचन ।
तत् सर्वं परिसंख्याय ततो ब्राह्मणसात्करोत्
सरस्वती पुण्यतमा नदीनां
तथा समुद्राः सरितः साद्रयश्च ।
ईजानाय पुण्यतमाय राज्ञे
घृतं पयो दुदुहुर्नाहुषाय ॥ ४

---

द्वादशसमो द्वादशवार्षिकः शय इतिपाठे द्वादशहस्तः ॥ ८ ॥ व्यजीजयद्विजितवान् ॥ ९ ॥ रोहितान् लोहितान् लोहितभुप्रदेशान् पद्मरागखनिमतो वा मत्स्यान् देशविशेषान् हैरण्यान् स्वर्णाकरयुक्तान् जनोत्सेधान् जनेषु उत्सेध उच्छ्रायो येषां तान् मत्स्यदेशोत्पन्ने हि नद्यावद्यापि परंपरया पूर्वापरौ समुद्रौ गच्छत इति तेषामुच्छ्रितत्वं प्रसिद्धम् ॥ १३ ॥ अतिरिक्तमवशिष्टं भुञ्जानो जन एव हीयते न त्वन्नमित्यर्थः ॥ १४ ॥ इति श्रीमहाभारते द्रोणपर्वणि टीकायां द्विषष्टितमोऽध्यायः ॥ ६२ ॥

६३

**ययातिमिति** ॥ १ ॥ प्राज्यदक्षिणैः बहुदक्षिणैः ॥ २ ॥ अब्राह्मणानां ब्राह्मणद्वेषिणां म्लेच्छानामिति यावत् परिसंख्याय अपहृत्य ॥ ३ ॥

व्यूढे देवासुरे युद्धे कृत्वा देवसहायताम् ।
चतुर्धा व्यभजत् सर्वां चतुर्भ्यः पृथिवीमिमाम्
यज्ञैर्नानाविधैरिष्ट्वा प्रजामुत्पाद्य चोत्तमाम् ।
देवयान्यां चौशनस्यां शर्मिष्ठायां च धर्मतः
देवारण्येषु सर्वेषु विजहारामरोपमः ।
आत्मनः कामचारेण द्वितीय इव वासवः ७
यदा नाभ्यगमच्छान्तिं कामानां सर्ववेदवित्
ततो गाथामिमां गीत्वा सदारः प्राविशद्वनम्
यत्पृथिव्यां व्रीहियवं हिरण्यं पशवः स्त्रियः
नालमेकस्य तत्सर्वमिति मत्वा शमं व्रजेत् ९
एवं कामान् परित्यज्य ययातिर्धृतिमेत्य च ।
पूरुं राज्ये प्रतिष्ठाप्य प्रयातो वनमीश्वरः १०
स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया ।
पुत्रात् पुण्यतरस्तुभ्यं मा पुत्रमनुतप्यथाः ।
अयज्वानमदाक्षिण्यमभिश्वैत्येति व्याहरन् ॥

इति श्रीमहाभारते द्रोणपर्वणि अभिमन्युवधपर्वणि षोडशराजकीये
त्रिषष्टितमोऽध्यायः ॥ ६३ ॥

६४

नारद उवाच ।
नाभागमम्बरीषं च मृतं सृञ्जय शुश्रुम ।
यः सहस्रं सहस्राणां राज्ञां चैकस्त्वयोधयत्
जिगीषमाणाः संग्रामे समन्ताद्वैरिणोऽभ्ययुः
अस्त्रयुद्धविदो घोराः सृजन्तश्चाशिवा गिरः
बललाघवशिक्षाभिस्तेषां सोऽस्त्रबलेन च ।
छत्रायुधध्वजरथांश्छित्त्वा प्रासान् गतव्यथः
त एनं मुक्तसन्नाहाः प्रार्थयन् जीवितैषिणः ।
शरण्यमीयुः शरणं तवास्म इति वादिनः ४
स तु तान् वशगान् कृत्वा
जित्वा चेमां वसुंधराम् ।
ईजे यज्ञशतैरिष्टैर्यथा शास्त्रं तथाऽनघ ॥ ५
बुभुजुः सर्वसंपन्नमन्नमन्ये जनाः सदा ।
तस्मिन् यज्ञे तु विप्रेन्द्राः संतृप्ताः परमार्चिताः
मोदकान् पूरिकापूपान्
स्वादुपूर्णाश्च शष्कुलीः ।
करंभान् पृथुमृद्वीका
अन्नानि सुकृतानि च ॥ ७
सूपान् मैरेयकापूपान् रागखाण्डवपानकान्
मृष्टान्नानि सुयुक्तानि मृदूनि सुरभीणि च ८
घृतं मधु पयस्तोयं दधीनि रसवन्ति च ।
फलं मूलं च सुस्वादु द्विजास्तत्रोपभुञ्जते ९
मादनीयानि पापानि
विदित्वा चात्मनः सुखम् ।
अपिबन्त यथाकामं
पानपा गीतवादितैः ॥ १०
तत्र स्म गाथा गायन्ति
क्षीबा हृष्टाः पठन्ति च ।
नाभागस्तुतिसंयुक्ता
ननृतुश्च सहस्रशः ॥ ११
तेषु यज्ञेष्वम्बरीषो दक्षिणामत्यकालयत् ।
राज्ञां शतसहस्राणि दश प्रयुतयाजिनाम् १२
हिरण्यकवचान् सर्वान्
श्वेतच्छत्रप्रकीर्णकान् ।
हिरण्यस्यन्दनारूढान्
सानुयात्रपरिच्छदान् ॥ १३
ईजानो वितते यज्ञे दक्षिणामत्यकालयत् ।
मूर्धाभिषिक्तांश्च नृपान् राजपुत्रशतानि च ॥
सदण्डकोशनिचयान् ब्राह्मणेभ्यो ह्यमन्यत ।
नैवं पूर्वे जनाश्चक्रुर्न करिष्यन्ति चापरे ॥ १५

---

चतुर्भ्यः ऋत्विग्भ्यः प्राची दिग्घोतुर्दक्षिणाध्वर्योरित्यादि श्रुतेः ॥ ५ ॥ इति श्रीमहाभारते द्रोणपर्वणि टीकायां त्रिषष्टितमोऽध्यायः ॥ ६३ ॥

६४

नाभागमिति ॥ १ ॥ मादनीयानि मदकराणि सुरादीनि पापानि पापहेतूनीति ज्ञात्वाऽपि सुखलिप्सवः पिबन्तीत्यर्थः ॥ १० ॥ अत्यकालयद्दातुं निष्कासितवान् । जिता राजान एव सोपस्करदक्षिणात्वेन दत्ताः । तेषां राज्यानि ते राजानश्च ब्राह्मणसात्कृता इत्यर्थः ॥ १२ ॥

यदम्बरीषो नृपतिः करोत्यमितदक्षिणः ।
इत्येवमनुमोदन्ते प्रीता यस्य महर्षयः ॥ १६
स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया ।
पुत्रात् पुण्यतरस्तुभ्यं मा पुत्रमनुतप्यथाः ।
अयज्वानमदाक्षिण्यमभिश्वैत्येति व्याहरन् ॥

इति श्रीमहाभारते द्रोणपर्वणि अभिमन्युवधपर्वणि षोडशराजकीये
चतुःषष्टितमोऽध्यायः ॥ ६४ ॥

## ६५

नारद उवाच ।
शशिबिन्दुं च राजानं मृतं सृञ्जय शुश्रुम ।
ईजे स विविधैर्यज्ञैः श्रीमान् सत्यपराक्रमः १
तस्य भार्यासहस्राणां शतमासीन्महात्मनः ।
एकैकस्यां च भार्यायां सहस्रं×तनयाऽभवन्
ते कुमाराः पराक्रान्ताः सर्वे नियुतयाजिनः
राजानः क्रतुभिर्मुख्यैरीजाना वेदपारगाः ३
हिरण्यकवचाः सर्वे सर्वे चोत्तमधन्विनः ।
सर्वेऽश्वमेधैरीजानाः कुमाराः शशिबिन्दवः
तानश्वमेधे राजेन्द्रो ब्राह्मणेभ्योऽददत् पिता
शतं शतं रथगजा एकैकं पृष्ठतोऽन्वयुः ॥ ५
राजपुत्रं तदा कन्यास्तपनीयस्वलंकृताः ।
कन्यां कन्यां शतं नागा
नागे नागे शतं रथाः ॥ ६
रथे रथे शतं चाश्वा बलिनो हेममालिनः ।
अश्वे अश्वे गोसहस्रं गवां पञ्चाशदाविकाः ७
एतद्धनमपर्याप्तमश्वमेधे महामखे ।
शशबिन्दुर्महाभागो ब्राह्मणेभ्यो ह्यमन्यत ८
वार्क्षाश्च यूपा यावन्त अश्वमेधे महामखे ।
ते तथैव पुनश्चान्ये तावन्तः काञ्चनाऽभवन् ९
भक्ष्यान्नपाननिचयाः पर्वताः क्रोशमुच्छ्रिताः
तस्याश्वमेधे निर्वृत्ते राज्ञः शिष्टास्त्रयोदश १०
तुष्टपुष्टजनाकीर्णां शान्तविघ्नामनामयाम् ।
शशिबिन्दुरिमां भूमिं चिरं भुक्त्वा दिवं गतः
स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया ।
पुत्रात् पुण्यतरस्तुभ्यं मा पुत्रमनुतप्यथाः ।
अयज्वानमदाक्षिण्यमभिश्वैत्येति व्याहरन् ॥

इति श्रीमहाभारते द्रोणपर्वणि अभिमन्युवधपर्वणि षोडशराजकीये
पञ्चषष्टितमोऽध्यायः ॥ ६५ ॥

## ६६

नारद उवाच ।
गयं चामूर्तरयसं मृतं सृञ्जय शुश्रुम ।
यो वै वर्षशतं राजा हुतशिष्टाशनोऽभवत् ॥१
तस्मै ह्यग्निर्वरं प्रादात् ततो वव्रे वरं गयः ।
तपसा ब्रह्मचर्येण व्रतेन नियमेन च ॥ २
गुरूणां च प्रसादेन
वेदानिच्छामि वेदितुम् ।
स्वधर्मेणाविहिंस्यान्यान्
धनमिच्छामि चाक्षयम् ॥ ३

---

इति श्रीमहाभारते द्रोणपर्वणि टीकायां चतुःषष्टितमोऽध्यायः ॥ ६४ ॥ × विसर्गलोपे संधिरार्षः ।

६५

शशिबिंदुमिति ॥ १ ॥ त्रयोदशात्र निचयाः शिष्टाः ॥ १० ॥ इति श्रीमहाभारते द्रोणपर्वणि टीकायां पञ्चषष्टितमोऽध्यायः ॥ ६५ ॥

६६

गयमिति स्पष्टार्थः ॥ १ ॥

विप्रेषु ददतश्चैव श्रद्धा भवतु नित्यशः ।
अनन्यासु सवर्णासु पुत्रजन्म च मे भवेत् ॥ ४
अन्नं मे ददतः श्रद्धा धर्मे मे रमतां मनः ।
अविघ्नं चास्तु मे नित्यं धर्मकार्येषु पावक ॥
तथा भविष्यतीत्युक्त्वा तत्रैवान्तरधीयत ।
गयो ह्यवाप्य तत्सर्वं धर्मेणारीनजीजयत् ॥
स दर्शपौर्णमासीभ्यां कालेष्वाग्रयणेन च ।
चातुर्मास्यैश्च विविधैर्यज्ञैश्चावाप्तदक्षिणैः ॥ ७
अयजच्छ्रद्धया राजा परिसंवत्सरान् शतम् ।
गवां शतसहस्राणि शतमश्वशतानि च ॥ ८
शतं निष्कसहस्राणि गवां चाप्ययुतानि षट्
उत्थायोत्थाय स प्रादात् परिसंवत्सरान् शतं
नक्षत्रेषु च सर्वेषु ददन्नक्षत्रदक्षिणाः ।
ईजे च विविधैर्यज्ञैर्यथा सोमोऽङ्गिरा यथा ॥
सौवर्णां पृथिवीं कृत्वा य इमां मणिशर्कराम्
विप्रेभ्यः प्राददद्राजा सोऽश्वमेधे महामखे ॥
जाम्बूनदमया यूपाः सर्वे रत्नपरिच्छदाः ।
गयस्यासन् समृद्धास्तु सर्वभूतमनोहराः ॥
सर्वकामसमृद्धं च प्रादादन्नं गयस्तदा ।
ब्राह्मणेभ्यः प्रहृष्टेभ्यः सर्वभूतेभ्य एव च ॥ १३
स समुद्रवनद्वीपनदीनदवनेषु च ।
नगरेषु च राष्ट्रेषु दिवि व्योम्नि च येऽवसन् ॥
भूतग्रामाश्च विविधाः संतृप्ता यज्ञसंपदा ।
गयस्य सदृशो यज्ञो नास्त्यन्य इति तेऽब्रुवन् ॥ १५
षट्त्रिंशद्योजनायामा त्रिंशद्योजनमायता ।
पश्चात् पुरश्चतुर्विंशद्वेदी ह्यासीद्धिरण्मयी ॥
गयस्य यजमानस्य मुक्ता वज्रमणिस्तृता ।
प्रादात् स ब्राह्मणेभ्योऽथ वासांस्याभरणानि च ॥ १७
यथोक्ता दक्षिणाश्चान्या विप्रेभ्यो भूरिदक्षिणः
यत्र भोजनशिष्टस्य पर्वताः पञ्चविंशतिः॥१८
कुल्याः कुशलवाहिन्यो रसानामभवंस्तदा ।
वस्त्राभरणगन्धानां राशयश्च पृथग्विधाः ॥
यस्य प्रभावाच्च गयस्त्रिषु लोकेषु विश्रुतः ।
वटश्चाक्षय्यकरणः पुण्यं ब्रह्मसरश्च तत् ॥ २०
स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया ।
पुत्रात् पुण्यतरस्तुभ्यं मा पुत्रमनुतप्यथाः ।
अयज्वानमदाक्षिण्यमभिश्वैत्येति व्याहरन् ॥

इति श्रीमहाभारते द्रोणपर्वणि अभिमन्युवधपर्वणि षोडशराजकीये षट्षष्टितमोऽध्यायः ॥ ६६ ॥

## ६७

नारद उवाच ।
सांकृतिं रन्तिदेवं च मृतं सृञ्जय शुश्रुम ।
यस्य द्विशतसाहस्रा आसन् सूदा महात्मनः
गृहानभ्यागतान् विप्रानतिथीन् परिवेषकाः
पक्वापक्वं दिवारात्रं वरान्नममृतोपमम् ॥ २
न्यायेनाधिगतं वित्तं ब्राह्मणेभ्यो ह्यमन्यत ।
वेदानधीत्य धर्मेण यश्चक्रे द्विषतो वशे ॥ ३
उपस्थिताश्च पशवः स्वयं यं शंसितव्रतम् ।
बहवः स्वर्गमिच्छन्तो विधिवत् सत्रयाजिनम्
नदी महानसाद्यस्य प्रवृत्ता चर्मराशितः ।
तस्माच्चर्मण्वती पूर्वमग्निहोत्रेऽभवत् पुरा ॥ ५
ब्राह्मणेभ्योऽददन्निष्कान्सौवर्णान्स प्रभावतः
तुभ्यं निष्कं तुभ्यं निष्कमिति ह स्म प्रभाषते
तुभ्यं तुभ्यमिति प्रादा- न्निष्कान्निष्कान् सहस्रशः ।
ततः पुनः समाश्वास्य निष्कानेव प्रयच्छति ॥ ७
अल्पं दत्तं मयाद्येति निष्ककोटिं सहस्रशः ।
एकाह्ना दास्यति पुनः कोऽन्यस्तत् संप्रदास्यति ॥ ८

---

नक्षत्रविहिता दक्षिणाः ॥ १० ॥ इति श्रीमहाभारते द्रोणपर्वणि टीकायां षट्षष्टितमोऽध्यायः ॥ ६६ ॥

६७

सांकृतिमिति ॥ १ ॥

द्विजपाणिवियोगेन दुःखं मे शाश्वतं महत्।
भविष्यति न सन्देह एवं राजाऽददद्वसु ॥ ९
सह रथैश्च सौवर्णान् वृषभान् गोशतानुगान्।
सार्धं शतं सुवर्णानां निष्कमाहुर्धनं तथा ॥
अध्यर्धमासमददद्ब्राह्मणेभ्यः शतं समाः ।
अग्निहोत्रोपकरणं यज्ञोपकरणं च यत् ॥ ११
ऋषिभ्यःकरकान् कुंभान् स्थालीःपिठरमेव च
शयनासनयानानि प्रासादांश्च गृहाणि च ॥
वृक्षांश्च विविधान् दद्यादन्नानि च धनानि च
सर्वं सौवर्णमेवासीद्रन्तिदेवस्य धीमतः ॥
तत्रास्य गाथा गायन्ति ये पुराणविदो जनाः
रन्तिदेवस्य तां दृष्ट्वा समृद्धिमतिमानुषीम् ॥
नैतादृशं दृष्टपूर्वं कुबेरसदनेष्वपि ।
धनं च पूर्यमाणं नः किं पुनर्मनुजेष्विति ॥१५
व्यक्तं वस्वोकसारेयमित्यूचुस्तत्र विस्मिताः
सांकृते रन्तिदेवस्य यां रात्रिमतिथिर्वसेत् ॥
आलभ्यन्त तदा गावः सहस्राण्येकविंशतिः
तत्र स्म सूदाः क्रोशन्ति सुमृष्टमणिकुण्डलाः॥
सूपं भूयिष्ठमश्नीध्वं नाद्य मांसं यथा पुरा ।
रन्तिदेवस्य यत्किंचित् सौवर्णमभवत् तदा॥
तत् सर्वं वितते यज्ञे ब्राह्मणेभ्यो ह्यमन्यत ।
प्रत्यक्षं तस्य हव्यानि प्रतिगृह्णन्ति देवताः ॥
कव्यानि पितरःकाले सर्वकामान् द्विजोत्तमाः
स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया॥२०
पुत्रात् पुण्यतरस्तुभ्यं मा पुत्रमनुतप्यथाः ।
अयज्वानमदाक्षिण्यमभिश्वैत्येति व्याहरन्२१

इति श्रीमहाभारते द्रोणपर्वणि अभिमन्युवधपर्वणि षोडशराजकीये सप्तषष्टितमोऽध्यायः ॥ ६७ ॥

## ६८

नारद उवाच ।
दौष्यन्तिं भरतं चापि मृतं सृञ्जय शुश्रुम।
कर्माण्यसुकराण्यन्यैः कृतवान् यः शिशुर्वने
हिमावदातान् यः सिंहान्नखदंष्ट्रायुधान् बली
निर्वीर्यांस्तरसा कृत्वा विचकर्ष बबन्ध च ॥
क्रूरांश्चोग्रतरान् व्याघ्रान्
दमित्वा चाकरोद्वशे ।
मनःशिला इव शिलाः
संयुक्ता जतुराशिभिः ॥ ३
व्यालांश्चातिबलवान् सुप्रतीकान् गजानपि
दंष्ट्रासु गृह्य विमुखान् शुष्कास्यानकरोद्वशे॥
महिषानप्यतिबलो बलिनो विचकर्ष ह ।
सिंहानां च सुदृप्तानां शतान्याकर्षयद्बलात् ॥
बलिनः सृमरान् खड्गान्
नानासत्त्वानि चाप्युत ।
कृच्छ्रप्राणं वने बद्ध्वा
दमयित्वाऽप्यवासृजत् ॥ ६
तं सर्वदमनेत्याहुर्द्विजास्तेनास्य कर्मणा ।
तं प्रत्यषेधज्जननी मा सत्त्वानि विजीजहि॥
सोऽश्वमेधशतेनेष्ट्वा यमुनामनुवीर्यवान् ।
त्रिशताश्वान् सरस्वत्यां गङ्गामनु चतुःशतान्
सोऽश्वमेधसहस्रेण राजसूयशतेन च ।
पुनरीजे महायज्ञैः समाप्तवरदक्षिणैः ॥ ९
अग्निष्टोमातिरात्राभ्यामिष्ट्वा विश्वजिता अपि
वाजपेयसहस्राणां सहस्रैश्च सुसंवृतैः ॥ १०

---

पारिभाषिकं निष्कमाह-**सहस्रश इति** ॥ १० ॥ अध्यर्धमासं पक्षे पक्षे इत्यर्थः । शतं समा इति वाक्यशेषात् ॥ ११ ॥ वस्वोकसारा सलोप आर्षः । कनकमयानि ओकांसि सारो यस्याः सा तथा ॥१६॥ इति श्रीमहाभारते द्रोणपर्वणि टीकायां सप्तषष्टितमोऽध्यायः ॥ ६७ ॥

६८

**दौष्यन्तिमिति** ॥१॥ **क्रूरानिति** । यथा मनःशिलामयाः शिलाः जतुराशिभिर्लाक्षापुंजैर्युक्तास्तत्सदृशान् रक्तबिन्दुयुक्तान् रक्तपीतवर्णान् व्याघ्रविशेषान् वशेऽकरोदित्यर्थः ॥ ३ ॥ कृच्छ्रप्राणं संकटगतं यथा स्यात्तथा बद्ध्वा ॥ ६ ॥ मा विजीजहि मा हिंसीः ॥ ७ ॥

दृष्ट्वा शाकुन्तलो राजा
तर्पयित्वा द्विजान् धनैः ।
सहस्रं यत्र पद्मानां
कण्वाय भरतो ददौ ॥ ११
जाम्बूनदस्य शुद्धस्य कनकस्य महायशाः ।
यस्य यूपः शतव्यामः परिणाहेन काञ्चनः ॥
समागम्य द्विजैः सार्धं सेन्द्रैर्देवैः समुच्छ्रितः
अलंकृतान्राजमानान् सर्वरत्नैर्मनोहरैः ॥ १३
हैरण्यानश्वान् द्विरदान्
रथानुष्ट्रानजाविकम् ।
दासीदासं धनं धान्यं
गाः सवत्साः पयस्विनीः ॥ १४
ग्रामान् गृहांश्च क्षेत्राणि
विविधांश्च परिच्छदान् ।
कोटीशतायुतांश्चैव
ब्राह्मणेभ्यो ह्यमन्यत ॥ १५
चक्रवर्ता ह्यदीनात्मा जितारिर्ह्यजितः परैः
स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया॥१६
पुत्रात पुण्यतरस्तुभ्यं मा पुत्रमनुतप्यथाः ।
अयज्वानमदाक्षिण्यमभिश्वैत्येति व्याहरन् ॥

इति श्रीमहाभारते द्रोणपर्वणि अभिमन्युवधपर्वणि षोडशराजकीये
अष्टषष्टितमोऽध्यायः ॥ ६८ ॥

## ६९

नारद उवाच ।
पृथुं वैन्यं च राजानं मृतं सृञ्जय शुश्रुम ।
यमभ्यषिञ्चन् साम्राज्ये राजसूये महर्षयः ॥
यत्नतः प्रथितेत्यूचुः सर्वानभिभवन् पृथुः ।
क्षतान्नस्त्रास्यते सर्वानित्येवं क्षत्रियोऽभवत
पृथुं वैन्यं प्रजा दृष्ट्वा रक्ताः स्मेति यदब्रुवन् ।
ततो राजेति नामास्य अनुरागादजायत ॥
अकृष्टपच्या पृथिवी आसीद्वैन्यस्य कामधुक्
सर्वाः कामदुघा गावः पुटके पुटके मधु ॥ ४
आसन् हिरण्मया दर्भाः सुखस्पर्शाः सुखावहाः
तेषां चीराणि संवीताः प्रजास्तेष्वेव शेरते ॥
फलान्यमृतकल्पानि स्वादूनि च मधूनि च ।
तेषामासीत्तदाहारो निराहाराश्च नाभवन्
अरोगाः सर्वसिद्धार्था मनुष्या ह्यकुतोभयाः
न्यवसन्त यथाकामं वृक्षेषु च गुहासु च ॥ ७
प्रविभागो न राष्ट्राणां पुराणां चाभवत्तदा ।
यथासुखं यथाकामं तथैता मुदिताः प्रजाः ॥
तस्य संस्तंभिता ह्यापः समुद्रमभियास्यतः
पर्वताश्च ददुर्मार्गं ध्वजभंगश्च नाभवत् ॥ ९
तं वनस्पतयः शैला देवासुरनरोरगाः ।
सप्तर्षयः पुण्यजना गन्धर्वाप्सरसोऽपि च १०
पितरश्च सुखासीनमभिगम्येदमब्रुवन् ।
सम्राडसिक्षत्रियोसि राजा गोप्ता पितासि नः
देह्यस्मभ्यं महाराज
प्रभुः सन्नीप्सितान् वरान् ।
यैर्वयं शाश्वतीस्तृप्ती-
र्वर्तयिष्यामहे सुखम् ॥ १२
तथेत्युक्त्वा पृथुर्वैन्यो
गृहीत्वाऽऽजगवं धनुः ।
शरांश्चाप्रतिमान् घोरां-
श्चिन्तयित्वाऽब्रवीन्महीम् ॥ १३
एह्येहि वसुधे क्षिप्रं क्षरैभ्यः काङ्क्षितं पयः ।
ततो दास्यामि भद्रं ते अन्नं यस्य यथेप्सितम्
वसुधोवाच ।
दुहितृत्वेन मां वीर संकल्पयितुमर्हसि ।
तथेत्युक्त्वा पृथुः सर्वं विधानमकरोद्वशी ॥
ततो भूतनिकायास्तां वसुधां दुदुहुस्तदा ।
तां वनस्पतयः पूर्वं समुत्तस्थुर्दुधुक्षवः ॥ १६

व्यामो हस्तचतुष्टयम् । परिणाहेन दैर्घ्येण ॥ १२ ॥ इति श्रीमहाभारते द्रोणपर्वणि टीकायामष्टषष्टितमोऽध्यायः ॥ ६८ ॥

६९

**पृथुमिति** ॥ १ ॥ प्रथिता पृथ्वी अनेनेति पृथुरित्यर्थः ॥ २ ॥ तेषां दर्भाणामेव चीराणि वल्कलानि यैः प्रजाः संवीताः तान्येव परिधानीयानि शयनानि चेत्यर्थः ॥ ५ ॥ ध्वजभङ्गस्तोरणादिना ॥ ९ ॥

साऽतिष्ठद्वत्सला वत्सं
दोग्धृपात्राणि चेच्छती ।
वत्सोऽभूत् पुष्पितः शालः
प्लक्षो दोग्धाऽभवत् तदा ॥ १७
छिन्नप्ररोहणं दुग्धं पात्रमौदुम्बरं शुभम् ।
उदयः पर्वतो वत्सो मेरुर्दोग्धा महागिरिः ॥
रत्नान्योषधयो दुग्धं पात्रमश्ममयं तथा ।
दोग्धा चासीत्तदा देवो दुग्धमूर्जस्करं प्रियम्
असुरा दुदुहुर्मायामामपात्रे तु ते तदा ।
दोग्धा द्विमूर्धा तत्रासीद्वत्सश्चासीद्विरोचनः
कार्षिं च सस्यं च नरा दुदुहुः पृथिवीतले ।
स्वायंभुवो मनुर्वत्सस्तेषां दोग्धाऽभवत् पृथुः
अलाबुपात्रे च तथा विषं दुग्धा वसुंधरा ।
धृतराष्ट्रोऽभवद्दोग्धा तेषां वत्सस्तु तक्षकः॥
सप्तर्षिभिर्ब्रह्म दुग्धा तथा चाक्लिष्टकर्मभिः ॥
दोग्धा बृहस्पतिः पात्रं छन्दो वत्सश्च सोमराट्
अन्तर्धानं चामपात्रे दुग्धा पुण्यजनैर्विराट् ।
दोग्धा वैश्रवणस्तेषां वत्सश्चासीद्वृषध्वजः ॥
पुण्यगन्धान् पद्मपात्रे गन्धर्वाप्सरसोऽदुहन्
वत्सश्चित्ररथस्तेषां दोग्धा विश्वरुचिः प्रभुः
स्वधां रजतपात्रेषु दुदुहुः पितरश्च ताम् ।
वत्सो वैवस्वतस्तेषां यमो दोग्धाऽन्तकस्तदा
एवं निकायैस्तैर्दुग्धा
पयोऽभीष्टं हि सा विराट् ।
यैर्वर्तयन्ति ते ह्यद्य
पात्रैर्वत्सैश्च नित्यशः ॥ २७
यज्ञैश्च विविधैरिष्ट्वा पृथुर्वैन्यः प्रतापवान् ।
संतर्पयित्वा भूतानि सर्वैः कामैर्मनःप्रियैः ॥
हैरण्यानकरोद्राजा ये केचित् पार्थिवा भुवि
तान् ब्राह्मणेभ्यः प्रायच्छदश्वमेधे महामखे२९
षष्टिनागसहस्राणि षष्टिनागशतानि च ।
सौवर्णानकरोद्राजा ब्राह्मणेभ्यश्च तान् ददौ
इमां च पृथिवीं सर्वां मणिरत्नविभूषिताम् ।
सौवर्णीमकरोद्राजा ब्राह्मणेभ्यश्च तां ददौ३१
स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया ।
पुत्रात् पुण्यतरस्तुभ्यं मा पुत्रमनुतप्यथाः॥ ३२
अयज्वानमदाक्षिण्यमभिश्वैत्येति व्याहरन्

इति श्रीमहाभारते द्रोणपर्वणि अभिमन्युवधपर्वणि षोडशराजकीये
एकोनसप्ततितमोऽध्यायः ॥ ६९ ॥

## ७०

नारद उवाच ।
रामो महातपाः शूरो वीरलोकनमस्कृतः।
जामदग्न्योऽप्यतियशा अवितृप्तो मरिष्यति॥१
यस्मायमनुपर्येति भूमिं कुर्वन्निमां सुखाम् ।
न चासीद्विक्रिया यस्य प्राप्य श्रियमनुत्तमाम्
यः क्षत्रियैः परामृष्टे वत्से पितरि चाब्रुवन् ।
ततोऽवधीत् कार्तवीर्यमजितं समरे परैः ॥ ३
क्षत्रियाणां चतुःषष्टिमयुतानि सहस्रशः ।
तदा मृत्योः समेतानि एकेन धनुषाऽजयत्४
ब्रह्मद्विषां चाथ तस्मिन् सहस्राणि चतुर्दश ।
पुनरन्यान्निजग्राह दन्तक्रूरं जघान ह ॥ ५
सहस्रं मुसलेनाहन् सहस्रमसिनाऽवधीत् ।
उद्बन्धनात् सहस्रं च सहस्रमुदके धृतम् ॥ ६
दन्तान् भक्त्वा सहस्रस्य कर्णान्नासान्यकृन्तत
ततः सप्तसहस्राणां कटुधूपमपाययत् ॥ ७

---

**दोग्धेति**। चाद्वत्सोऽपि देव एव। प्रियं दुग्धं पात्रमप्यर्थान्मन एवेति कल्प्यम्। ग्रन्थान्तराद्वा वत्सपात्रे ज्ञेये। एवमन्यत्रापि ॥ १९ ॥ विराट् पृथिवी॥ २४ ॥ पार्थिवाः पृथ्वीसम्बन्धिपदार्थाः ॥ २९ ॥ इति श्रीमहाभारते द्रोणपर्वणि टीकायामेकोनसप्ततितमोऽध्यायः ॥ ६९ ॥

७०

ये मृतास्तेऽतीता ये वर्तमानास्तेऽपि मरिष्यन्त्येवेत्याह **राम इति** ॥ १ ॥ यो रामः इमां पृथ्वीं सुखामनुपद्रवां कुर्वन् आद्यमादियुगविहितं धर्ममनुपर्येति स्म अनुप्रवर्तितवानित्यर्थः ॥ २ ॥ क्षत्रियैः कार्तवीर्यपुत्रैः अब्रुवन्नविकत्थयन् ॥३॥ मृत्योर्मृत्युमवधीकृत्य ॥४॥ तस्मिंस्तन्मध्ये एव दन्तक्रूरं तद्देशाधिपतिम् ॥५॥ उद्बन्धना वृक्षशाखावलम्बनात् ॥ ६ ॥

शिष्टान् बद्धा च हत्वा वै
तेषां मूर्ध्नि विभिद्य च ।
गुणावतीमुत्तरेण
खाण्डवाद्दक्षिणेन च ।
गिर्यन्ते शतसाहस्रा हैहयाः समरे हताः॥ ८
सरथाश्वगजा वीरा निहतास्तत्र शेरते ।
पितुर्वधामर्षितेन जामदग्न्येन धीमता ॥ ९
निजघ्ने दशसाहस्रान् रामः परशुना तदा ।
न ह्यमृष्यत ता वाचो यास्तैर्भृशमुदीरिताः॥
भृगो रामाभिधावेति यदाक्रन्दन् द्विजोत्तमाः
ततः काश्मीरदरदान् कुन्तिक्षुद्रकमालवान्॥
अङ्गवङ्गकलिङ्गांश्च
विदेहांस्ताम्रलिप्तकान् ।
रक्षोवाहान् वीतिहोत्रां-
स्त्रिगर्तान् मार्तिकावतान् ॥ १२
शिबीनन्यांश्च राजन्यान्
देशान् देशान् सहस्रशः ।
निजघान शितैर्बाणै-
र्जामदग्न्यः प्रतापवान् ॥ १३
कोटीशतसहस्राणि क्षत्रियाणां सहस्रशः ।
इंद्रगोपकवर्णस्य बन्धुजीवनिभस्य च ॥ १४
रुधिरस्य परीवाहैः पूरयित्वा सरांसि च ।
सर्वानष्टादश द्वीपान् वशमानीय भार्गवः१५
ईजे क्रतुशतैः पुण्यैः समाप्तवरदक्षिणैः ।
वेदीमष्टनलोत्सेधां सौवर्णां विधिनिर्मिताम्
सर्वरत्नशतैः पूर्णां पताकाशतमालिनीम् ।
ग्राम्यारण्यैः पशुगणैः संपूर्णां च महीमिमाम्
रामस्य जामदग्न्यस्य प्रतिजग्राह कश्यपः ।
ततः शतसहस्राणि द्विपेन्द्रान् हेमभूषणान् ॥
निर्दस्युं पृथिवीं कृत्वा शिष्टेष्टजनसंकुलाम् ।
कश्यपाय ददौ रामो हयमेधे महामखे ॥ १९
त्रिःसप्तकृत्वः पृथिवीं कृत्वा निःक्षत्रियां प्रभुः
इष्ट्वा क्रतुशतैर्वीरो ब्राह्मणेभ्यो ह्यमन्यत ॥२०
सप्तद्वीपां वसुमतीं मारीचोऽगृह्णत द्विजः ।
रामं प्रोवाच निर्गच्छ वसुधातो ममाज्ञया ॥
स कश्यपस्य वचनात् प्रोत्सार्य सरितां पतिं
इषुपाते युधां श्रेष्ठः कुर्वन् ब्राह्मणशासनम् २२
अध्यावसद्गिरिश्रेष्ठं महेन्द्रं पर्वतोत्तमम् ।
एवं गुणशतैर्युक्तो भृगूणां कीर्तिवर्धनः ॥ २३
जामदग्न्यो ह्यतियशा मरिष्यति महाद्युतिः।
त्वया चतुर्भद्रतरः पुत्रात् पुण्यतरस्तव॥२४
अयज्वानमदाक्षिण्यं मा पुत्रमनुतप्यथाः ।
एते चतुर्भद्रतरास्त्वया भद्रशताधिकाः ।
मृता नरवरश्रेष्ठ मरिष्यन्ति च सृञ्जय ॥ २५

इति श्रीमहाभारते द्रोणपर्वणि अभिमन्युवधपर्वणि षोडशराजकीये सप्ततितमोऽध्यायः ॥ ७० ॥

## ७१

व्यास उवाच ।
पुण्यमाख्यानमायुष्यं श्रुत्वा षोडशराजकम्
अव्याहरन्नरपतिस्तूष्णीमासीत् स सृञ्जयः १
तमब्रवीत् तथाऽऽसीनं नारदो भगवानृषिः ।
श्रुतं कीर्तयतो मह्यं गृहीतं ते महाद्युते ॥ २
आहोस्विदन्ततो नष्टं श्राद्धं शूद्रीपताविव ।
स एवमुक्तः प्रत्याह प्राञ्जलिः सृञ्जयस्तदा॥३
एतच्छ्रुत्वा महाबाहो धन्यमाख्यानमुत्तमम्।
राजर्षीणां पुराणानां यज्वनां दक्षिणावताम्
विस्मयेन हते शोके तमसीवार्कतेजसा ।
विपाप्मास्म्यव्यथोपेतो ब्रूहि किं करवाण्यहम्
नारद उवाच ।
दिष्ट्याऽपहृतशोकस्त्वं
वृणीष्वेह यदिच्छसि ।
तत् तत् प्रपत्स्यसे सर्वं
न मृषावादिनो वयम् ॥ ६

---

तैराश्रमवासिभिः ॥ १० ॥ अष्टनलेत्यत्र नलशब्दश्चतुर्हस्तवचनः ॥ १६ ॥ इति श्रीमहाभारते द्रोणपर्वणि टीकायां सप्ततितमोऽध्यायः ॥ ७० ॥

७१

पुण्यमाख्यानमिति ॥ १ ॥ विस्मयेन पुण्याख्यानश्रवणजनितचित्तविस्तारेण ॥ ४ ॥

सृञ्जय उवाच।
एतेनैव प्रतीतोऽहं प्रसन्नो यद्भवान् मम।
प्रसन्नो यस्य भगवान्न तस्यास्तीह दुर्लभम् ७
नारद उवाच।
मृतं ददानि ते पुत्रं दस्युभिर्निहतं वृथा।
उद्धृत्य नरकात् कष्टात् पशुवत्प्रोक्षितं यथा
व्यास उवाच।
प्रादुरासीत् ततः पुत्रः सृञ्जयस्याद्भुतप्रभः।
प्रसन्नेनर्षिणा दत्तः कुबेरतनयोपमः॥ ९
ततः संगम्य पुत्रेण प्रीतिमानभवन्नृपः।
ईजे च क्रतुभिः पुण्यैः समाप्तवरदक्षिणैः॥१०
अकृतार्थश्च भीतश्च न च सांग्रामिको हतः।
अयज्वा त्वनपत्यश्च ततोऽसौ जीवितः पुनः
शूरो वीरः कृतार्थश्च प्रताप्यारीन्सहस्रशः
अभिमन्युर्गतो वीरः पृतनाभिमुखो हतः १२
ब्रह्मचर्येण यान् कांश्चित्
प्रज्ञया च श्रुतेन च।
इष्टैश्च क्रतुभिर्यान्ति
तांस्ते पुत्रोऽक्षयान् गतः॥ १३
विद्वांसः कर्मभिः पुण्यैः
स्वर्गमीहन्ति नित्यशः।
न तु स्वर्गादयं लोकः
काम्यते स्वर्गवासिभिः॥ १४
तस्मात् स्वर्गगतं पुत्र-
मर्जुनस्य हतं रणे।
न चेहानयितुं शक्यं
किञ्चिदप्राप्यमीहितम्॥ १५
यां योगिनो ध्यानविविक्तदर्शनाः
प्रयान्ति यां चोत्तमयज्विनो जनाः
तपोभिरिद्धैरनुयान्ति यां तथा
तामक्षयां ते तनयो गतो गतिम् १६
अन्तात् पुनर्भावगतो विराजते
राजेव वीरो ह्यमृतात्मरश्मिभिः।
तामैन्दवीमात्मतनुं द्विजोचितां
गतोऽभिमन्युर्न स शोकमर्हति १७
एवं ज्ञात्वा स्थिरो भूत्वा
जह्यरीन् धैर्यमाप्नुहि।
जीवन्त एव नः शोच्या न तु स्वर्गगतोऽनघ
शोचतो हि महाराज अघमेवाभिवर्धते।
तस्माच्छोकं परित्यज्य श्रेयसे प्रयतेद्बुधः १९
प्रहर्षमभिमानं च सुखप्राप्तिं च चिन्तयन्।
एतद्बुद्ध्वा बुधाः शोकं
न शोकः शोक उच्यते॥ २०
एवं विद्वन् समुत्तिष्ठ प्रयतो भव मा शुचः।
श्रुतस्ते संभवो मृत्योस्तपांस्यनुपमानि च २१
सर्वभूतसमत्वं च चञ्चलाश्च विभूतयः।
सृञ्जयस्य तु तं पुत्रं मृतं संजीवितं पुनः २२
एवं विद्वन्महाराज मा शुचः साधयाम्यहम्
एतावदुक्त्वा भगवांस्तत्रैवान्तरधीयत २३
वागीशाने भगवति व्यासे व्यभ्रनभःप्रभे।
गते मतिमतां श्रेष्ठे समाश्वास्य युधिष्ठिरम्॥
पूर्वेषां पार्थिवेन्द्राणां महेन्द्रप्रतिमौजसाम्।
न्यायाधिगतवित्तानां तां श्रुत्वा यज्ञसंपदम्
संपूज्य मनसा विद्वान्
विशोकोऽभूद्युधिष्ठिरः।
पुनश्चाचिन्तयद्दीनः
किंस्विद्वक्ष्ये धनञ्जयम्॥ २६

इति श्रीमहाभारते द्रोणपर्वणि अभिमन्युवधपर्वणि षोडशराजकीये
एकसप्ततितमोऽध्यायः॥ ७१॥

॥ समाप्तमभिमन्युवधपर्व॥

---

प्रतीतः प्रीतः॥ ७॥ सांग्रामिकः युद्धोद्यतः॥ ११॥ अप्राप्यमीहितमीप्सितं किञ्चिदपि न शक्यं न सुलभम्॥१५॥ अन्तान्मरणात्। भावगतः संप्राप्तः। द्विजोचितां द्विजैरभिमताम्॥ १७॥ अघं दुःखम्॥ १९॥ अभिमानं मानातिशयम्। चिन्तयन्नभिलषन् शोकं न कुर्वन्तीति शेषः। न शोकः शोक उच्यते किं त्वात्मैव शोक इत्यर्थः॥ २०॥ सृञ्जयस्य पुत्रमुद्दिश्य चञ्चला विभूतयश्च श्रुता इति शेषानुषङ्गः॥ २२॥ इति श्रीमहाभारते द्रोणपर्वणि टीकायामेकसप्ततितमोऽध्यायः॥ ७१॥

# प्रतिज्ञापर्व ४

## ७२

सञ्जय उवाच ।
तस्मिन्नहनि निर्वृत्ते घोरे प्राणभृतां क्षये।
आदित्येऽस्तं गते श्रीमान्
संध्याकाल उपस्थिते ॥ १
व्यपयातेषु वासाय सर्वेषु भरतर्षभ ।
हत्वा संशप्तकव्रातान् दिव्यैरस्त्रैः कपिध्वजः
प्रायात्स शिबिरं जिष्णुर्जैत्रमास्थाय तं रथम्
गच्छन्नेव च गोविन्दं साश्रुकण्ठोऽभ्यभाषत
किं नु मे हृदयं त्रस्तं वाक्च सज्जति केशव ।
स्यन्दन्ति चाप्यनिष्टानि
गात्रं सीदति चाच्युत ॥ ४
अनिष्टं चैव मे श्लिष्टं हृदयान्नापसर्पति।
भुवि ये दिक्षु चात्युग्रा
उत्पातास्त्रासयन्ति माम् ॥ ५
बहुप्रकारा दृश्यन्ते सर्व एवाघशंसिनः ।
अपि स्वस्ति भवेद्राज्ञः सामात्यस्य गुरोर्मम×६
वासुदेव उवाच ।
व्यक्तं शिवं तव भ्रातुः सामात्यस्य भविष्यति
मा शुचः किञ्चिदेवान्यत् तत्रानिष्टं भविष्यति
सञ्जय उवाच ।
ततः सन्ध्यामुपास्यैव वीरौ वीरावसादने ।
कथयन्तौ रणे वृत्तं प्रयातौ रथमास्थितौ ८
ततः स्वशिबिरं प्राप्तौ हतानन्दं हतत्विषम् ।
वासुदेवोऽर्जुनश्चैव कृत्वा कर्म सुदुष्करम् ९
ध्वस्ताकारं समालक्ष्य शिबिरं परवीरहा ।
बीभत्सुरब्रवीत् कृष्णमस्वस्थहृदयस्ततः ॥ १०
नदन्ति नाद्य तूर्याणि मंगल्यानि जनार्दन ।
मिश्रा दुन्दुभिनिर्घोषैः शङ्खाश्चाडम्बरैः सह
वीणा नैवाद्य वाद्यन्ते शम्यातालस्वनैः सह।
मङ्गल्यानि च गीतानि न गायन्ति पठन्ति च
स्तुतियुक्तानि रम्याणि ममानीकेषु बन्दिनः
योधाश्चापि हि मां दृष्ट्वा निवर्तन्ते ह्यधोमुखाः
कर्माणि च यथापूर्वं कृत्वा नाभिवदन्ति माम्
अपि स्वस्ति भवेदद्य भ्रातृभ्यो मम माधव १४
न हि शुध्यति मे भावो दृष्ट्वा स्वजनमाकुलम्
अपि पाञ्चालराजस्य विराटस्य च मानद १५
सर्वेषां चैव योधानां सामग्र्यं स्यान्ममाच्युत
न च मामद्य सौभद्रः प्रहृष्टो भ्रातृभिः सह।
रणादायान्तमुचितं प्रत्युद्याति हसन्निव १६
सञ्जय उवाच ।
एवं संकथयन्तौ तौ प्रविष्टौ शिबिरं स्वकम्
ददृशाते भृशास्वस्थान् पाण्डवान्नष्टचेतसः
दृष्ट्वा भ्रातॄंश्च पुत्रांश्च विमना वानरध्वजः ।
अपश्यंश्चैव सौभद्रमिदं वचनमब्रवीत् ॥ १८
मुखवर्णोऽप्रसन्नो वः सर्वेषामेव लक्ष्यते ।
न चाभिमन्युं पश्यामि न च मां प्रतिनन्दथ
मया श्रुतश्च द्रोणेन चक्रव्यूहो विनिर्मितः ।
न च वस्तस्य भेत्ताऽस्ति विना सौभद्रमर्भकं
न चोपदिष्टस्तस्यासीन्मयानीकाद्विनिर्गमः
कच्चिन्न बालो युष्माभिः परानीकं प्रवेशितः
भित्त्वाऽनीकं महेष्वासः परेषां बहुशो युधि
कच्चिन्न निहतः संख्ये सौभद्रः परवीरहा ॥
लोहिताक्षं महाबाहुं जातं सिंहमिवाद्रिषु।
उपेन्द्रसदृशं ब्रूत कथमायोधने हतः ॥ २३
सुकुमारं महेष्वासं वासवस्यात्मजात्मजम् ।
सदा मम प्रियं ब्रूत कथमायोधने हतः ॥ २४
सुभद्रायाः प्रियं पुत्रं द्रौपद्याः केशवस्य च ।
अम्बायाश्च प्रियं नित्यं
कोऽवधीत् कालमोहितः ॥ २५
सदृशो वृष्णिवीरस्य केशवस्य महात्मनः ।
विक्रमश्रुतमाहात्म्यैः कथमायोधने हतः २६
वार्ष्णेयीदयितं शूरं मया सततलालितम् ।
यदि पुत्रं न पश्यामि यास्यामि यमसादनम्
मृदुकुञ्चितकेशान्तं बालं बालमृगेक्षणम् ।
मत्तद्विरदविक्रान्तं सिंहपोतमिवोद्गतम् ॥
स्मिताभिभाषिणं दान्तं गुरुवाक्यकरं सदा।
बाल्येऽप्यतुलकर्माणं प्रियवाक्यममत्सरम् ॥
महोत्साहं महाबाहुं दीर्घराजीवलोचनम् ।
भक्तानुकम्पिनं दान्तं न च नीचानुसारिणम्

७२

तस्मिन्निति ॥ १ ॥ श्लिष्टमनुबद्धम् ॥ ५॥ आडम्बरैस्तूर्यरवैः ॥ ११ ॥ × मम गुरोः-ज्येष्ठभ्रातुर्युधिष्ठिरस्येत्यर्थः ॥

कृतज्ञं ज्ञानसम्पन्नं कृतास्त्रमनिवर्तिनम् ।
युद्धाभिनन्दिनं नित्यं द्विषतां भयवर्धनम् ॥
स्वेषां प्रियहिते युक्तं पितॄणां जयगृद्धिनम् ।
न च पूर्वं प्रहर्तारं संग्रामे नष्टसंभ्रमम् ॥ ३२
यदि पुत्रं न पश्यामि यास्यामि यमसादनम्
रथेषु गण्यमानेषु गणितं तं महारथम् ॥ ३३
मयाध्यर्धगुणं संख्ये तरुणं बाहुशालिनम् ।
प्रद्युम्नस्य प्रियं नित्यं केशवस्य ममैव च॥३४
यदि पुत्रं न पश्यामि यास्यामि यमसादनम्
सुनसं सुललाटान्तं स्वक्षिभ्रूदशनच्छदम्॥३५
अपश्यतस्तद्वदनं का शान्तिर्हृदयस्य मे ।
तन्त्रीस्वनसुखं रम्यं पुंस्कोकिलसमध्वनिम्३६
अशृण्वतः स्वनं तस्य का शान्तिर्हृदयस्य मे
रूपं चाप्रतिमं तस्य त्रिदशैश्चापि दुर्लभम्॥३७
अपश्यतो हि वीरस्य का शान्तिर्हृदयस्य मे
अभिवादनदक्षं तं पितॄणां वचने रतम् ॥ ३८
नाद्याहं यदि पश्यामि का शान्तिर्हृदयस्य मे
सुकुमारः सदा वीरो महार्हशयनोचितः॥३९
भूमावनाथवच्छेते नूनं नाथवतां वरः ।
शयानं समुपासन्ति यं पुरा परमस्त्रियः॥४०
तमद्य विप्रविद्धाङ्गमुपासन्त्यशिवाः शिवाः।
यः पुरा बोध्यते सुप्तः सूत-मागध-बन्दिभिः
बोधयन्त्यद्य तं नूनं श्वापदा विकृतैः स्वनैः।
छत्रच्छायासमुचितं तस्य तद्वदनं शुभम्॥ ४२
नूनमद्य रजोध्वस्तं रणरेणुः करिष्यति ।
हा पुत्रकावितृप्तस्य सततं पुत्रदर्शने ॥ ४३
भाग्यहीनस्य कालेन यथा मे नीयसे बलात्
सा च संयमनी नूनं सदा सुकृतिनां गतिः४४
स्वभाभिर्मोहिता रम्या त्वयाऽत्यर्थं विराजते
नूनं वैवस्वतश्च त्वां वरुणश्च प्रियातिथिम्४५
शतक्रतुर्धनेशश्च प्राप्तमर्चन्त्यभीरुकम् ।

एवं विलप्य बहुधा भिन्नपोतो वणिग्यथा
दुःखेन महताऽऽविष्टो युधिष्ठिरमपृच्छत ।
कच्चित्स कदनं कृत्वा परेषां कुरुनन्दन ॥ ४७
स्वर्गतोऽभिमुखः संख्ये युध्यमानो नरर्षभैः।
स नूनं बहुभिर्यत्तैर्युध्यमानो नरर्षभैः ॥ ४८
असहायः सहायार्थी मामनुध्यातवान् ध्रुवम्
पीड्यमानः शरैस्तीक्ष्णैः कर्णद्रोणकृपादिभिः
नानालिङ्गैः सुधौताग्रैर्मम पुत्रोऽल्पचेतनः ।

इह मे स्यात् परित्राणं पितेति स पुनः पुनः
इत्येवं विलपन्मन्ये नृशंसैर्भुवि पातितः ।
अथवा मत्प्रसूतः स स्वस्त्रीयो माधवस्य च५१
सुभद्रायां च संभूतो न चैवं वक्तुमर्हति ।
वज्रसारमयं नूनं हृदयं सुदृढं मम ॥ ५२
अपश्यतो दीर्घबाहुं रक्ताक्षं यन्न दीर्यते ।
कथं बाले महेष्वासा नृशंसा मर्मभेदिनः॥५३
स्वस्त्रीये वासुदेवस्य मम पुत्रेऽक्षिपन् शरान्।
यो मां नित्यमदीनात्मा प्रत्युद्गम्याभिनन्दति

उपायान्तं रिपून् हत्वा
सोऽद्य मां किं न पश्यति ।
नूनं स पातितः शेते
धरण्यां रुधिरोक्षितः ॥ ५५

शोभयन्मेदिनीं गात्रैरादित्य इव पातितः ।
सुभद्रामनुशोचामि या पुत्रमपलायिनम् ॥५६
रणे विनिहतं श्रुत्वा शोकार्ता वै विनंक्ष्यति
सुभद्रा वक्ष्यते किं मामभिमन्युमपश्यती ५७
द्रौपदी चैव दुःखार्ते ते च वक्ष्यामि किं त्वहम्
वज्रसारमयं नूनं हृदयं यन्न यास्यति ॥ ५८
सहस्रधा वधूं दृष्ट्वा रुदतीं शोककर्शिताम् ।
दृप्तानां धार्तराष्ट्राणां सिंहनादो मया श्रुतः५९
युयुत्सुश्चापि कृष्णेन श्रुतो वीरानुपालभन् ।
अशक्नुवन्तो बीभत्सुं बालं हत्वा महारथाः६०
किं मोदध्वमधर्मज्ञाः पाण्डवं दृश्यतां बलम्
किं तयोर्विप्रियं कृत्वा केशवार्जुनयोर्मृधे ६१
सिंहवन्नदथ प्रीताः शोककाल उपस्थिते ।
आगमिष्यति वः क्षिप्रं फलं पापस्य कर्मणः
अधर्मो हि कृतस्तीव्रः कथं स्यादफलश्चिरम्
इति तान् परिभाषन् वै वैश्यापुत्रो महामतिः
अपायाच्छस्त्रमुत्सृज्य कोपदुःखसमन्वितः ।
किमर्थमेतन्नाख्यातं त्वया कृष्ण रणे मम॥६४
†अधाक्षं तानहं क्रूरांस्तदा सर्वान् महारथान्

सञ्जय उवाच ।

पुत्रशोकार्दितं पार्थं ध्यायन्तं साश्रुलोचनम्
निगृह्य वासुदेवस्तं पुत्राधिभिरभिप्लुतम् ।
मैवमित्यब्रवीत् कृष्णस्तीव्रशोकसमन्वितम्
सर्वेषामेष वै पन्थाः शूराणामनिवर्तिनाम् ।
क्षत्रियाणां विशेषेण येषां युद्धेन जीविका ॥

यथेति कथमर्थे ॥ ४४ ॥ यदि मे पिता स्यात्तदा मे त्राणं स्यादित्यन्वयः ॥ ५० ॥ † अधक्ष्यामिति पाठः

एषा वै युध्यमानानां शूराणामनिवर्तिनाम्
विहिता सर्वशास्त्रज्ञैर्गतिर्मतिमतां वर ॥ ६८
ध्रुवं हि युद्धे मरणं शूराणामनिवर्तिनाम् ।
गतः पुण्यकृतां लोकानभिमन्युर्न संशयः ६९
एतच्च सर्ववीराणां कांक्षितं भरतर्षभ ।
संग्रामेऽभिमुखो मृत्युं प्राप्नुयादिति मानद ७०
स च वीरान् रणे हत्वा राजपुत्रान् महाबलान्
वीरैराकांक्षितं मृत्युं संप्राप्तोऽभिमुखं रणे ७१
मा शुचः पुरुषव्याघ्र पूर्वैरेष सनातनः ।
धर्मकृद्भिः कृतो धर्मः क्षत्रियाणां रणे क्षयः ७२
इमे ते भ्रातरः सर्वे दीना भरतसत्तम ।
त्वयि शोकसमाविष्टे नृपाश्च सुहृदस्तव ॥ ७३
एतांश्च वचसा साम्ना समाश्वासय मानद ।
विदितं *वेदितव्यं ते न शोकं कर्तुमर्हसि ७४
एवमाश्वासितः पार्थः कृष्णेनाद्भुतकर्मणा ।
ततोऽब्रवीत्तदा भ्रातॄन्सर्वान् पार्थः सगद्गदान्
स दीर्घबाहुः पृथ्वंसो दीर्घराजीवलोचनः
अभिमन्युर्यथावृत्तः श्रोतुमिच्छाम्यहं तथा ७६
सनागस्यन्दनहयान् द्रक्ष्यध्वं निहतान् मया
संग्रामे सानुबन्धांस्तान् मम पुत्रस्य वैरिणः ॥
कथं च वः कृतास्त्राणां सर्वेषां शस्त्रपाणिनाम्
सौभद्रो निधनं गच्छेद्वज्रिणाऽपि समागतः
यद्येवमहमज्ञास्यमशक्तान् रक्षणे मम ।
पुत्रस्य पाण्डुपञ्चालान् मया गुप्तो भवेत् ततः
कथं च वो रथस्थानां शरवर्षाणि मुञ्चताम् ॥
नीतोऽभिमन्युर्निधनं कदर्थीकृत्य वः परैः ८०
अहो वः पौरुषं नास्ति न च वोऽस्ति पराक्रमः
यत्राभिमन्युः समरे पश्यतां वो निपातितः ८१
आत्मानमेव गर्हेयं यदहं वै सुदुर्बलान् ।
युष्मानाज्ञाय निर्यातो भीरूनकृतनिश्चयान् ॥
आहोस्विद्भूषणार्थाय वर्म शस्त्रायुधानि वः ।
वाचस्तु वक्तुं संसत्सु मम पुत्रमरक्षताम् ॥ ८३
एवमुक्त्वा ततो वाक्यं तिष्ठंश्चापवरासिमान्
न स्माशक्यत बीभत्सुः केनचित्प्रसमीक्षितुं
तमन्तकमिव क्रुद्धं निःश्वसन्तं मुहुर्मुहुः ।
पुत्रशोकाभिसन्तप्तमश्रुपूर्णमुखं तदा ॥ ८५
न भाषितुं शक्नुवन्ति द्रष्टुं वा सुहृदोऽर्जुनम् ।
अन्यत्र वासुदेवाद्वा ज्येष्ठाद्वा पाण्डुनन्दनात्
सर्वास्ववस्थासु हितावर्जुनस्य मनोनुगौ ।
बहुमानात् प्रियत्वाच्च तावेनं वक्तुमर्हतः ॥ ८७
ततस्तं पुत्रशोकेन भृशं पीडितमानसम् ।
राजीवलोचनं क्रुद्धं राजा वचनमब्रवीत् ॥ ८८

इति श्रीमहाभारते द्रोणपर्वणि प्रतिज्ञापर्वणि अर्जुनकोपे
द्विसप्ततितमोऽध्यायः ॥ ७२ ॥

## ७३

युधिष्ठिर उवाच ।
त्वयि याते महाबाहो संशप्तकबलं प्रति ।
प्रयत्नमकरोत् तीव्रमाचार्यो ग्रहणे मम ॥ १
व्यूढानीका वयं द्रोणं वारयामः स्म सर्वशः
प्रतिव्यूह्य रथानीकं यतमानं तथा रणे ॥ २
स वार्यमाणो रथिभिर्मयि चापि सुरक्षिते ।
अस्मानभिजगामाशु पीडयन्निशितैः शरैः ३
ते पीड्यमाना द्रोणेन द्रोणानीकं न शक्नुमः ।
प्रतिवीक्षितुमप्याजौ भेत्तुं तत् कुत एव तु ॥ ४
वयं त्वप्रतिमं वीर्ये सर्वे सौभद्रमात्मजम् ।
उक्तवन्तः स्म तं तात भिन्ध्यनीकमिति प्रभो
स तथा नोदितोऽस्माभिः
सदश्व इव वीर्यवान् ।
असह्यमपि तं भारं
वोढुमेवोपचक्रमे ॥ ६
स तवास्त्रोपदेशेन वीर्येण च समन्वितः ।
प्राविशत्तद्बलं बालः सुपर्ण इव सागरम् ॥ ७
तेऽनुयाता वयं वीरं सात्वतीपुत्रमाहवे ।
प्रवेष्टुकामास्तेनैव येन स प्राविशच्चमूम् ॥ ८
ततः सैन्धवको राजा क्षुद्रस्तात जयद्रथः ।
वरदानेन रुद्रस्य सर्वान्नः समवारयत् ॥ ९

---

इति श्रीमहाभारते द्रोणपर्वणि टीकायां द्विसप्ततितमोऽध्यायः ॥ ७२ ॥ * भगवद्गीतादिप्रसंगादिदिति भावः ।

७३

त्वयीति ॥ १ ॥

ततो द्रोणः कृपः कर्णो द्रौणिः कौसल्य एव च
कृतवर्मा च सौभद्रं षड्रथाः पर्यवारयन्॥ १०
परिवार्य तु तैः सर्वैर्युधि बालो महारथैः।
यतमानः परं शक्त्या बहुभिर्विरथीकृतः ११
ततो दौःशासनिः क्षिप्रं तथा तैर्विरथीकृतम्
संशयं परमं प्राप्य दिष्टान्तेनाभ्ययोजयत् १२
स तु हत्वा सहस्राणि नराश्वरथदन्तिनाम्।
अष्टौ रथसहस्राणि नव दन्तिशतानि च॥१३
राजपुत्रसहस्रे द्वे वीरांश्चालक्षितान् बहून्।
बृहद्बलं च राजानं स्वर्गेणाजौ प्रयोज्य ह १४
ततः परमधर्मात्मा दिष्टान्तमुपजग्मिवान्।
एतावदेव निर्वृत्तमस्माकं शोकवर्धनम्॥ १५
स चैवं पुरुषव्याघ्रः स्वर्गलोकमवाप्तवान्।
ततोऽर्जुनो वचः श्रुत्वा धर्मराजेण भाषितं
हा पुत्र इति निःश्वस्य व्यथितो न्यपतद्भुवि।
विषण्णवदनाः सर्वे परिवार्य धनञ्जयम्॥ १७
नेत्रैरनिमिषैर्दीनाः प्रत्यवैक्षन् परस्परम्।
प्रतिलभ्य ततः संज्ञां वासविः क्रोधमूर्च्छितः
कम्पमानो ज्वरेणेव
निःश्वसंश्च मुहुर्मुहुः।
पाणिं पाणौ विनिष्पिष्य
श्वसमानोऽश्रुनेत्रवान्॥ १९
उन्मत्त इव विप्रेक्षन्निदं वचनमब्रवीत्*।

अर्जुन उवाच।

सत्यं वः प्रतिजानामि
श्वोऽस्मि हन्ता जयद्रथम्।
न चेद्वधभयाद्भीतो
धार्तराष्ट्रान् प्रहास्यति॥ २०
न चास्मान् शरणं गच्छेत्
कृष्णं वा पुरुषोत्तमम्।
भवन्तं वा महाराज
श्वोऽस्मि हन्ता जयद्रथम्॥ २१
धार्तराष्ट्रप्रियकरं मयि विस्मृतसौहृदम्।
पापं बालवधे हेतुं श्वोऽस्मि हन्ता जयद्रथम्
रक्षमाणाश्च तं सङ्ख्ये
ये मां योत्स्यन्ति केचन।
अपि द्रोणकृपौ राजन्
छादयिष्यामि ताञ्छरैः॥ २३
यद्येतदेवं संग्रामे न कुर्यां पुरुषर्षभाः।
मा स्म पुण्यकृतां लोकान्प्राप्नुयां शूरसंमतान्
ये लोका मातृहन्तॄणां ये चापि पितृघातिनाम्
गुरुदारगतानां ये पिशुनानां च ये सदा॥ २५
साधूनसूयतां ये च ये चापि परिवादिनाम्।
ये च निक्षेपहर्तॄणां ये च विश्वासघातिनाम्
भुक्तपूर्वां स्त्रियं ये च विन्दतामघशंसिनाम्।
ब्रह्मघ्नानां च ये लोका ये च गोघातिनामपि
पायसं वा यवान्नं वा शाकं कृसरमेव वा।
संयावापूपमांसानि ये च लोका वृथाश्नताम्
तानन्हायाधिगच्छेयं न चेद्धन्यां जयद्रथम्
वेदाध्यायिनमत्यर्थं संशितं वा द्विजोत्तमम्॥
अवमन्यमानो यान् याति
वृद्धान् साधून् गुरूंस्तथा।
स्पृशतो ब्राह्मणं गां च
पादेनाग्निं च या भवेत्॥ ३०
याऽप्सु श्लेष्म पुरीषं च मूत्रं वा मुञ्चतां गतिः
तां गच्छेयं गतिं कष्टां न चेद्धन्यां जयद्रथम्
नग्नस्य स्नायमानस्य या च वन्ध्यातिथेर्गतिः
उत्कोचिनां मृषोक्तीनां वञ्चकानां च या गतिः
आत्मापहारिणां या च
या च मिथ्याभिशंसिनाम्।
भृत्यैः संदिश्यमानानां
पुत्रदाराश्रितैस्तथा॥ ३३
असंविभज्य क्षुद्राणां या गतिर्मिष्टमश्नताम्।
तां गच्छेयं गतिं घोरां न चेद्धन्यां जयद्रथम्
संश्रितं चापि यस्त्यक्त्वा साधुं तद्वचने रतं
न बिभर्ति नृशंसात्मा निन्दते चोपकारिणं
अर्हते प्रातिवेश्याय श्राद्धं यो न ददाति च।
अनर्हेभ्यश्च यो दद्याद्वृषलीपतये तथा॥ ३६
मद्यपो भिन्नमर्यादः कृतघ्नो भर्तृनिन्दकः।
तेषां गतिमियां क्षिप्रं न चेद्धन्यां जयद्रथम्॥
भुञ्जानानां तु सव्येन उत्सङ्गे चापि खादताम्
पालाशमासनं चैव तिन्दुकैर्दन्तधावनम् ३८

---

कौसल्यो बृहद्बलः॥ १०॥ भुक्तपूर्वामन्योपभुक्तां विन्दतां स्वीकुर्वताम्॥ २७॥ आत्मापहारिणाम् आत्मानमन्यथा प्रकाशयतां मिथ्याभिशंसिनां असद्दोषोक्त्या परान् दूषयतां संदिश्यमानानां नियुज्यमानानाम्॥ ३३॥ वृषला शूद्रा कन्याभावे रजस्वला वा॥ ३६॥ * त्रिशिखां भ्रुकुटीं कृत्वा क्रोधसंरक्तलोचनः इति पाठान्तरम्।

ये चावर्जयतां लोकाः स्वपतां च तथोषसि
शीतभीताश्च ये विप्रा रणभीताश्च क्षत्रियाः
एककूपोदकग्रामे वेदध्वनिविवर्जिते ।
षण्मासं तत्र वसतां तथा शास्त्रं विनिन्दताम्
दिवामैथुनिनां चापि दिवसेषु च शेरते ।
अगारदाहिनां चैव गरदानां च ये मताः ४१
अग्न्यातिथ्यविहीनाश्च गोपानेषु च विघ्नदाः
रजस्वलां सेवयन्तः कन्यां शुल्केन दायिनः
या च वै बहुयाजिनां ब्राह्मणानां श्ववृत्तिनाम्
आस्यमैथुनिकानां च ये दिवा मैथुने रताः ४३
ब्राह्मणस्य प्रतिश्रुत्य यो वै लोभाद्ददाति न ।
तेषां गतिं गमिष्यामि श्वो न हन्यां जयद्रथम्
धर्मादपेता ये चान्ये मया नात्रानुकीर्तिताः
ये चानुकीर्तितास्तेषां गतिं क्षिप्रमवाप्नुयाम्
यदि व्युष्टामिमां रात्रिं श्वो न हन्यां जयद्रथम्
इमां चाप्यपरां भूयः प्रतिज्ञां मे निबोधत
यद्यस्मिन्नहते पापे सूर्योऽस्तमुपयास्यति ।
इहैव संप्रवेष्टाऽहं ज्वलितं जातवेदसम् ४७
अमुरसुरमनुष्याः पक्षिणो वोरगा वा
पितृरजनिचरा वा ब्रह्मदेवर्षयो वा
चरमचरमपीदं यत्परं चापि तस्मा-
त्तदपि मम रिपुं तं रक्षितुं नैव शक्ताः ।
यदि विशति रसातलं तदग्र्यं
वियदपि देवपुरं दितेः पुरं वा ।
तदपि शरशतैरहं प्रभाते
भृशमभिमन्युरिपोः शिरोऽभिहर्ता
एवमुक्त्वा विचिक्षेप
गाण्डीवं सव्यदक्षिणम् ।
तस्य शब्दमतिक्रम्य
धनुःशब्दोऽस्पृशद्दिवम् ॥ ५०
अर्जुनेन प्रतिज्ञाते पाञ्चजन्यं जनार्दनः ।
प्रदध्मौ तत्र संक्रुद्धो देवदत्तं च फाल्गुनः ५१
स पाञ्चजन्योऽच्युतवक्त्रवायुना
भृशं सुपूर्णोदरनिःसृतध्वनिः ।
जगत् सपातालवियद्दिगीश्वरं
प्रकम्पयामास युगात्यये यथा ॥ ५२
ततो वादित्रघोषाश्च प्रादुरासन् सहस्रशः ।
सिंहनादश्च पाण्डूनां प्रतिज्ञाते महात्मना ५३

इति श्रीमहाभारते द्रोणपर्वणि प्रतिज्ञापर्वणि अर्जुनप्रतिज्ञायां
त्रिसप्ततितमोऽध्यायः ॥ ७३ ॥

## ७४

सञ्जय उवाच ।
श्रुत्वा तु तं महाशब्दं
पाण्डूनां जयगृद्धिनाम् ।
चारैः प्रवेदिते तत्र
समुत्थाय जयद्रथः ॥ १
शोकसंमूढहृदयो दुःखेनाभिपरिप्लुतः ।
मज्जमान इवागाधे विपुले शोकसागरे ॥ २
जगाम समितिं राज्ञां सैन्धवो विमृशन् बहु
स तेषां नरदेवानां सकाशे पर्यदेवयत् ॥ ३
अभिमन्योः पितुर्भीतः
सव्रीडो वाक्यमब्रवीत् ।
योऽसौ पाण्डोः किल क्षेत्रे
जातः शक्रेण कामिना ॥ ४
स निनीषति दुर्बुद्धि-
र्मां किलैकं यमक्षयम् ।
तत् स्वस्ति वोऽस्तु यास्यामि
स्वगृहं जीवितेप्सया ॥ ५

तदपि तेऽपीत्यर्थः ॥ ४८ ॥ दितेरिति कार्ये कारणो-
पचाराद्दैत्यानामित्यर्थः ॥ ४९ ॥ शब्दं शब्दान्तरम् ॥ ५० ॥
इति श्रीमहाभारते द्रोणपर्वणि टीकायां त्रिसप्ततितमोऽ-
ध्यायः ॥ ७३ ॥

७४

श्रुत्वेति ॥ १ ॥ किलेत्यरुचौ ॥ ५ ॥

अथवास्त्रप्रतिबलास्त्रात मां क्षत्रियर्षभाः।
पार्थेन प्रार्थितं वीरास्ते संदत्त ममाभयम् ६
द्रोण-दुर्योधन-कृपाः कर्ण-मद्रेश-बाल्हिकाः।
दुःशासनादयः शक्तास्त्रातुं मामन्तकार्दितम्
किमङ्ग पुनरेकेन फाल्गुनेन जिघांसता।
न त्रायेयुर्भवन्तो मां समस्ताः पतयः क्षितेः
प्रहर्षे पाण्डवेयानां श्रुत्वा मम महद्भयम्।
सीदन्ति मम गात्राणि मुमूर्षोरिव पार्थिवाः

वधो नूनं प्रतिज्ञातो
मम गाण्डीवधन्वना।
तथा हि हृष्टाः क्रोशन्ति
शोककाले स्म पाण्डवाः॥ १०

तन्न देवा न गन्धर्वा नासुरोरगराक्षसाः।
उत्सहन्तेऽन्यथाकर्तुं कुत एव नराधिपाः ११
तस्मान्मामनुजानीत भद्रं वोऽस्तु नरर्षभाः।
अदर्शनं गमिष्यामि न मां द्रक्ष्यन्ति पाण्डवाः

एवं विलपमानं तं
भयाद्व्याकुलचेतसम्।
आत्मकार्यगरीयस्त्वा-
द्राजा दुर्योधनोऽब्रवीत्॥ १३

न भेतव्यं नरव्याघ्र को हि त्वां पुरुषर्षभ।
मध्ये क्षत्रियवीराणां तिष्ठन्तं प्रार्थयेद्युधि १४
अहं वैकर्तनः कर्णश्चित्रसेनो विविंशतिः।*
भूरिश्रवाः शलः शल्यो वृषसेनो दुरासदः॥
पुरुमित्रो जयो भोजः काम्बोजश्च सुदक्षिणः
सत्यव्रतो महाबाहुर्विकर्णो दुर्मुखश्च ह १६

दुःशासनः सुबाहुश्च
कालिङ्गश्चाप्युदायुधः।
विन्दानुविन्दावावन्त्यौ
द्रोणो द्रौणिश्च सौबलः॥ १७
एते चान्ये च बहवो
नानाजनपदेश्वराः।
ससैन्यास्त्वाभियास्यन्ति
व्येतु ते मानसो ज्वरः॥ १८

त्वं चापि रथिनां श्रेष्ठः स्वयं शूरोऽमितद्युते
स कथं पाण्डवेयेभ्यो भयं पश्यसि सैन्धव

अक्षौहिण्यो दशैका च
मदीयास्तव रक्षणे।
यत्ता योत्स्यन्ति मा भैस्त्वं
सैन्धव व्येतु ते भयम्॥ २०

सञ्जय उवाच।

एवमाश्वासितो राजन् पुत्रेण तव सैन्धवः
दुर्योधनेन सहितो द्रोणं रात्रावुपागमत् २१
उपसंग्रहणं कृत्वा द्रोणाय स विशांपते।
उपोपविश्य प्रणतः पर्यपृच्छदिदं तदा॥ २२
निमित्ते दूरपातित्वे लघुत्वे दृढवेधने।
मम ब्रवीतु भगवान् विशेषं फाल्गुनस्य च॥
विद्याविशेषमिच्छामि ज्ञातुमाचार्य तत्त्वतः
अर्जुनस्यात्मनश्चैव याथातथ्यं प्रचक्ष्व मे॥२४

द्रोण उवाच।

स ममाचार्यकं तात
तव चैवार्जुनस्य च।
योगाद्दुःखोषितत्वाच्च
तस्मात्त्वत्तोऽधिकोऽर्जुनः॥ २५

न तु ते युधि संत्रासः कार्यः पार्थात् कथञ्चन
अहं हि रक्षिता तात भयात्त्वां नात्र संशयः
न हि मद्बाहुगुप्तस्य प्रभवन्त्यमरा अपि।
व्यूहयिष्यामि तं व्यूहं यं पार्थो न तरिष्यति
तस्माद्युद्ध्यस्व मा भैस्त्वं स्वधर्ममनुपालय।
पितृपैतामहं मार्गमनुयाहि महारथ॥ २८
अधीत्य विधिवद्वेदानग्नयः सुहुतास्त्वया।
इष्टं च बहुभिर्यज्ञैर्न ते मृत्युर्भयङ्करः॥ २९

दुर्लभं मानुषैर्मन्दै-
र्महाभाग्यमवाप्स्यतु।
भुजवीर्यार्जितान् लोकान्
दिव्यान् प्राप्स्यस्यनुत्तमान्॥ ३०

कुरवः पाण्डवाश्चैव वृष्णयोऽन्ये च मानवाः
अहं च सह पुत्रेण अध्रुवा इति चिन्त्यताम्॥

पर्यायेण वयं सर्वे
कालेन बलिना हताः।
परलोकं गमिष्यामः
स्वैः स्वैः कर्मभिरन्विताः॥ ३२
तपस्तप्त्वा तु यान् लोकान्
प्राप्नुवन्ति तपस्विनः।
क्षत्रधर्माश्रिता वीराः
क्षत्रियाः प्राप्नुवन्ति तान्॥ ३३

अक्षौहिण्य इति प्रत्यक्षौहिणीशेषमादायोक्तम्॥ २०॥ उपसंग्रहणं पादाभिवन्दनम्॥ २२॥ निमित्ते लक्ष्यभेदने॥२३॥ योगादभ्यासात्॥२५॥ * 'एतेषां नरदेवानां मत्तमातङ्गगामिनाम्। संघातमुपयातानामपि बिभ्येत्पुरन्दरः' इत्यधिकम्।

तानि यानीह देशेषु प्रतीक्षन्ति स्म भारत ।
बुभुक्षितानामर्थाय क्लृप्तमन्नं समन्ततः ॥२५
यो यो यत्र द्विजो भोज्यं भोक्तुं कामयते तदा
तस्य तस्य तु तत्रैवमुपजह्रुस्तदा नृप ॥ २६
तत्र तत्र स्थिता राजन् रौहिणेयस्य शासनात्
भक्ष्यपेयस्य कुर्वन्ति राशींस्तत्र समन्ततः ॥
वासांसि च महार्हाणि पर्यंकास्तरणानि च ।
पूजार्थं तत्र क्लृप्तानि विप्राणां सुखमिच्छतां
यत्र यः स्वदते विप्रः क्षत्रियो वाऽपि भारत ।
तत्र तत्र तु तस्यैव सर्वं क्लृप्तमदृश्यत ॥ २९
यथासुखं जनः सर्वो याति तिष्ठति वै तदा
यातुकामस्य यानानि पानानि तृषितस्य च
बुभुक्षितस्य चान्नानि स्वादूनि भरतर्षभ ।
उपजह्रुर्नरास्तत्र वस्त्राण्याभरणानि च ॥३२
स पन्थाः प्रबभौ राजन् सर्वस्यैव सुखावहः
स्वर्गोपमस्तदा वीर नराणां तत्र गच्छताम्
नित्यप्रमुदितोपेतः स्वादुभक्ष्यः शुभान्वितः
विपण्यापणपण्यानां नानाजनशतैर्वृतः ।
नानाद्रुमलतोपेतो नानारत्नविभूषितः ॥ ३३

ततो महात्मा नियमे स्थितात्मा
पुण्येषु तीर्थेषु वसूनि राजन् ।
ददौ द्विजेभ्यः क्रतुदक्षिणाश्च
यदुप्रवीरो हलभृत् प्रतीतः ॥ ३४
दोग्ध्रीश्च धेनूश्च सहस्रशो वै
सुवाससः काञ्चनबद्धशृङ्गीः ।
हयांश्च नानाविधदेशजातान्
यानानि दासांश्च शुभान् द्विजेभ्यः ॥
रत्नानि मुक्तामणिविद्रुमं चा-
प्यग्र्यं सुवर्णं रजतं सुशुद्धम् ।
अयस्मयं ताम्रमयं च भाण्डं
ददौ द्विजातिप्रवरेषु रामः ॥ ३६
एवं स वित्तं प्रददौ महात्मा
सरस्वतीतीर्थवरेषु भूरि ।
ययौ क्रमेणाप्रतिमप्रभाव-
स्ततः कुरुक्षेत्रमुदारवृत्तिः ॥ ३७

जनमेजय उवाच ।

सारस्वतानां तीर्थानां गुणोत्पत्तिं वदस्व मे
फलं च द्विपदां श्रेष्ठ कर्मनिर्वृत्तिमेव च ३८
यथाक्रमेण भगवंस्तीर्थानामनुपूर्वशः ।
ब्रह्मन् ब्रह्मविदां श्रेष्ठ परं कौतूहलं हि मे ३९

वैशम्पायन उवाच ।

तीर्थानां च फलं राजन् गुणोत्पत्तिं च सर्वशः
मयोच्यमानं वै पुण्यं शृणु राजेन्द्र कृत्स्नशः ४०

पूर्वं महाराज यदुप्रवीर
ऋत्विक्सुहृद्विप्रगणैश्च सार्धम् ।
पुण्यं प्रभासं समुपाजगाम
यत्रोडुराड्यक्ष्मणा क्लिश्यमानः ४१
विमुक्तशापः पुनराप्य तेजः
सर्वं जगद्भासयते नरेन्द्र ।
एवं तु तीर्थप्रवरं पृथिव्यां
प्रभासनात्तस्य ततः प्रभासः ॥ ४२

जनमेजय उवाच ।

कथं तु भगवान्सोमो यक्ष्मणा समगृह्यत ।
कथं च तीर्थप्रवरे तस्मिंश्चन्द्रो न्यमज्जत ४३
कथमाप्लुत्य तस्मिंस्तु पुनराप्यायितः शशी ।
एतन्मे सर्वमाचक्ष्व विस्तरेण महामुने ॥ ४४

वैशम्पायन उवाच ।

दक्षस्य तनयास्तात प्रादुरासन्विशांपते ।
स सप्तविंशतिं कन्या दक्षः सोमाय वै ददौ
नक्षत्रयोगनिरताः सङ्ख्यानार्थं च ताऽभवन्
पत्न्यो वै तस्य राजेन्द्र सोमस्य शुभकर्मणः

तास्तु सर्वा विशालाक्ष्यो
रूपेणाप्रतिमा भुवि ।
अत्यरिच्यत तासां तु
रोहिणी रूपसंपदा ॥ ४७

ततस्तस्यां स भगवान्प्रीतिं चक्रे निशाकरः
साऽस्य हृद्या बभूवाथ तस्मात्तां बुभुजे सदा
पुरा हि सोमो राजेन्द्र रोहिण्यामवसत्परम्
ततस्ताः कुपिताः सर्वा नक्षत्राख्या महात्मनः
ता गत्वा पितरं प्राहुः प्रजापतिमतन्द्रिताः ।
सोमो वसति नास्मासु रोहिणीं भजते सदा
ता वयं सहिताः सर्वास्त्वत्सकाशे प्रजेश्वर
वत्स्यामो नियताहारास्तपश्चरणतत्पराः ५१

विपणिः पण्यवीथिका आपणाः हट्टाः पण्यानि विक्रेयद्रव्याणि ॥ ३३ ॥ गुणान् रमणीयत्वादीन् उत्पत्तिं संभवं कर्मनिर्वृत्तिं तीर्थयात्राविधिसिद्धिम् ॥ ३८ ॥ यथाक्रमेण तीर्थक्रमापेक्षया अनुपूर्वशः गुणोत्पत्त्यादिक्रमापेक्षया ॥ ३९ ॥ प्रभासः प्रभासत्वम् ॥ ४२ ॥

श्रुत्वा तासां तु वचनं
दक्षः सोममथाब्रवीत् ।
समं वर्तस्व भार्यासु
मा त्वाऽधर्मो महान् स्पृशेत् ॥ ५२
तास्तु सर्वाऽब्रवीद्दक्षो
गच्छध्वं शशिनोऽन्तिकम् ।
समं वत्स्यति सर्वासु
चन्द्रमा मम शासनात् ॥ ५३
विसृष्टास्तास्तथा जग्मुः शीतांशुभवनं तदा
तथापि सोमो भगवान्पुनरेव महीपते ॥ ५४
रोहिणीं निवसत्येव प्रीयमाणो मुहुर्मुहुः ।
ततस्ताः सहिताः सर्वा भूयः पितरमब्रुवन्
तव शुश्रूषणे युक्ता वत्स्यामो हि तवान्तिके
सोमो वसति नास्मासु नाकरोद्वचनं तव ५६
तासां तद्वचनं श्रुत्वा दक्षः सोममथाब्रवीत् ।
समं वर्तस्व भार्यासु मा त्वां शप्स्ये विरोचन
अनादृत्य तु तद्वाक्यं दक्षस्य भगवाञ्शशी ।
रोहिण्या सार्धमवसत्ततस्ताः कुपिताः पुनः
गत्वा च पितरं प्राहुः प्रणम्य शिरसा तदा
सोमो वसति नास्मासु तस्मान्नः शरणं भव
रोहिण्यामेव भगवान् सदा वसति चन्द्रमाः
न त्वद्वचो गणयति नास्मासु स्नेहमिच्छति
तस्मान्नस्त्राहि सर्वा वै
यथा नः सोम आविशेत् ।
तच्छ्रुत्वा भगवान् क्रुद्धो
यक्ष्माणं पृथिवीपते ॥ ६१
ससर्ज रोषात्सोमाय स चोडुपतिमाविशत्
स यक्ष्मणाऽभिभूतात्माक्षीयताहरहः शशी ॥
यत्नं चाप्यकरोद्राजन् मोक्षार्थं तस्य यक्ष्मणः
इष्टिभिर्महाराज विविधाभिर्निशाकरः ६३
न चामुच्यत शापाद्वै क्षयं चैवाभ्यगच्छत ।
क्षीयमाणे ततः सोमे ओषध्यो न प्रजज्ञिरे ॥
निरास्वादरसाः सर्वा हतवीर्याश्च सर्वशः ।
ओषधीनां क्षये जाते प्राणिनामपि संक्षयः ॥
कृशाश्चासन्प्रजाः सर्वाः क्षीयमाणे निशाकरे
ततो देवाः समागम्य सोममूचुर्महीपते ६६
किमिदं भवतो रूपमीदृशं न प्रकाशते ।
कारणं ब्रूहि नः सर्वं येनेदं ते महद्भयम् ॥ ६७

श्रुत्वा तु वचनं त्वत्तो विधास्यामस्ततो वयम्
एवमुक्तः प्रत्युवाच सर्वांस्ताञ्शशलक्षणः ॥
शापस्य लक्षणं चैव यक्ष्माणं च तथाऽऽत्मनः
देवास्तथा वचः श्रुत्वा गत्वा दक्षमथाब्रुवन्
प्रसीद भगवन् सोमे
शापोऽयं विनिवर्त्यताम् ।
असौ हि चन्द्रमाः क्षीणः
किञ्चिच्छेषो हि लक्ष्यते ॥ ७०
क्षयाच्चैवास्य देवेश प्रजाश्चैव गताः क्षयम्
वीरुदोषधयश्चैव बीजानि विविधानि च ७१
तेषां क्षये क्षयोऽस्माकं
विनाऽस्माभिर्जगच्च किम् ।
इति ज्ञात्वा लोकगुरो
प्रसादं कर्तुमर्हसि ॥ ७२
एवमुक्तस्ततो देवान्प्राह वाक्यं प्रजापतिः ।
नैतच्छक्यं मम वचो व्यावर्तयितुमन्यथा ७३
हेतुना तु महाभागा निवर्तिष्यति केनचित् ।
समं वर्ततु सर्वासु शशी भार्यासु नित्यशः ७४
सरस्वत्या वरे तीर्थे उन्मज्जञ्शशलक्षणः ।
पुनर्वर्धिष्यते देवास्तद्वै सत्यं वचो मम ॥ ७५
मासार्धं च क्षयं सोमो नित्यमेव गमिष्यति
मासार्धं तु सदा वृद्धिं सत्यमेतद्वचो मम ७६
समुद्रं पश्चिमं गत्वा सरस्वत्यब्धिसङ्गमम् ।
आराधयतु देवेशं ततः कान्तिमवाप्स्यति ॥
सरस्वतीं ततः सोमः स जगामर्षिशासनात्
प्रभासं प्रथमं तीर्थं सरस्वत्या जगाम ह ७८
अमावास्यां महातेजास्तत्रोन्मज्जन्महाद्युतिः
लोकान्प्रभासयामास शीतांशुत्वमवाप च
देवास्तु सर्वे राजेन्द्र प्रभासं प्राप्य पुष्कलम्
सोमेन सहिता भूत्वा दक्षस्य प्रमुखेऽभवन् ८०
ततः प्रजापतिः सर्वा विससर्जाथ देवताः ।
सोमं च भगवान्प्रीतो भूयो वचनमब्रवीत् ॥
माऽवमंस्थाः स्त्रियः पुत्र
मा च विप्रान् कदाचन ।
गच्छ युक्तः सदा भूत्वा
कुरु वै शासनं मम ॥ ८२
स विसृष्टो महाराज जगामाथ स्वमालयम् ।
प्रजाश्च मुदिता भूत्वा पुनस्तस्थुर्यथा पुरा ८३

---

त्वा त्वां अधर्मः मा स्पृशेत् ॥ ५२ ॥ विरोचन ! हे विशेषेण रोचमान ! त्वां मा शप्स्ये तव रोचनां यथाऽहं शापेन न हरामि तथा यतस्वेत्यर्थः ॥ ५७ ॥ शापस्य लक्षणं कारणम् ॥ ६९ ॥

एवं ते सर्वमाख्यातं यथा शप्तो निशाकरः।
प्रभासं च यथा तीर्थं तीर्थानां प्रवरं महत् ८४
अमावास्यां महाराज
नित्यशः शशलक्षणः।
स्नात्वा ह्याप्यायते श्रीमान्
प्रभासे तीर्थ उत्तमे॥ ८५
अतश्चैतत्प्रजानन्ति प्रभासमिति भूमिप।
प्रभां हि परमां लेभे तस्मिन्नुन्मज्ज्य चन्द्रमाः
ततस्तु चमसोद्भेदमच्युतस्त्वगमद्बली।
चमसोद्भेद इत्येवं यं जनाः कथयन्त्युत ८७
तत्र दत्वा च दानानि विशिष्टानि हलायुधः
उषित्वा रजनीमेकां स्नात्वा च विधिवत्तदा
उदपानमथागच्छत्त्वरावान् केशवाग्रजः।
आद्यं स्वस्त्ययनं चैव यत्रावाप्य महत्फलम्॥
स्निग्धत्वादोषधीनां च
भूमेश्च जनमेजय।
जानन्ति सिद्धा राजेन्द्र
नष्टामपि सरस्वतीम्॥ ९०

इति श्रीमहाभारते शल्यान्तर्गतगदापर्वणि बलदेवतीर्थयात्रायां प्रभासोत्पत्तिकथने पञ्चत्रिंशोऽध्यायः॥ ३५॥

## ३६

वैशम्पायन उवाच।
तस्मान्नदीगतं चापि ह्युदपानं यशस्विनः।
त्रितस्य च महाराज जगामाथ हलायुधः १
तत्र दत्वा बहु द्रव्यं पूजयित्वा तथा द्विजान्
उपस्पृश्य च तत्रैव प्रहृष्टो मुसलायुधः॥ २
तत्र धर्मपरो भूत्वा त्रितः स सुमहातपाः।
कूपे च वसता तेन सोमः पीतो महात्मना ३
तत्र चैनं समुत्सृज्य भ्रातरौ जग्मतुर्गृहान्।
ततस्तौ वै शशापाथ त्रितो ब्राह्मणसत्तमः ४
जनमेजय उवाच।
उदपानं कथं ब्रह्मन् कथं च सुमहातपाः।
पतितः किं च संत्यक्तो भ्रातृभ्यां द्विजसत्तम
कूपे कथं च हित्वैनं भ्रातरौ जग्मतुर्गृहान्।
कथं च याजयामास पपौ सोमं च व कथम्
एतदाचक्ष्व मे ब्रह्मन् श्रोतव्यं यदि मन्यसे।
वैशम्पायन उवाच।
आसन् पूर्वयुगे राजन्मुनयो भ्रातरस्त्रयः॥७
एकतश्च द्वितश्चैव त्रितश्चादित्यसन्निभाः।
सर्वे प्रजापतिसमाः प्रजावन्तस्तथैव च॥ ८
ब्रह्मलोकजिताः सर्वे तपसा ब्रह्मवादिनः।
तेषां तु तपसा प्रीतो नियमेन दमेन च॥ ९
अभवद्गौतमो नित्यं पिता धर्मरतः सदा।
स तु दीर्घेण कालेन तेषां प्रीतिमवाप्य च१०
जगाम भगवान् स्थानमनुरूपमिवात्मनः।
राजानस्तस्य ये ह्यासन्याज्या राजन्महात्मनः
ते सर्वे स्वर्गते तस्मिंस्तस्य पुत्रानपूजयन्।
तेषां तु कर्मणा राजंस्तथा चाध्ययनेन च १२
त्रितः स श्रेष्ठतां प्राप यथैवास्य पिता तथा।
तथा सर्वे महाभागा मुनयः पुण्यलक्षणाः १३
अपूजयन्महाभागं यथास्य पितरं तथा।
कदाचिद्धि ततो राजन् भ्रातरावेकतद्वितौ
यज्ञार्थं चक्रतुश्चिन्तां तथा वित्तार्थमेव च।
तयोर्बुद्धिः समभवत्त्रितं गृह्य परन्तप॥ १५
याज्यान्सर्वानुपादाय प्रतिगृह्य पशूंस्ततः।
सोमं पास्यामहे हृष्टाः प्राप्य यज्ञं महाफलम्
चक्रुश्चैवं तथा राजन् भ्रातरस्त्रय एव च।
तथा ते तु परिक्रम्य याज्यान्सर्वान्पशून्प्रति
याजयित्वा ततो याज्यान्
लब्ध्वा तु सुबहून्पशून्।
याज्येन कर्मणा तेन
प्रतिगृह्य विधानतः॥ १८

इति श्रीमहाभारते शल्यान्तर्गतगदापर्वणि नैलकण्ठीये भारतभावदीपे पञ्चत्रिंशोऽध्यायः॥ ३५॥

३६

**तस्मादिति** ॥१॥ याजयामास स्वार्थे णिच्। यागं कृतवान्॥ ६॥ पशून् प्रति पश्वर्थं दक्षिणार्था गाः प्राप्तुमित्यर्थः॥ १७॥

प्राचीं दिशं महात्मान आजग्मुस्ते महर्षयः ।
त्रितस्तेषां महाराज पुरस्ताद्याति हृष्टवत् १९
एकतश्च द्वितश्चैव पृष्ठतः कालयन्पशून् ।
तयोश्चिन्ता समभवद्दृष्ट्वा पशुगणं महत् ॥२०

कथं च स्युरिमा गाव
आवाभ्यां हि विना त्रितम् ।
तावन्योन्यं समाभाष्य
एकतश्च द्वितश्च ह ॥ २१

यदूचतुर्मिथः पापौ तन्निबोध जनेश्वर ।
त्रितो यज्ञेषु कुशलस्त्रितो वेदेषु निष्ठितः २२
अन्यास्तु बहुला गावस्त्रितः समुपलप्स्यते ।
तदावां सहितौ भूत्वा गाः प्रकाल्य व्रजावहे

त्रितोऽपि गच्छतां काम-
मावाभ्यां वै विना कृतः ।
तेषामागच्छतां रात्रौ
पथिस्थानां वृकोऽभवत् ॥ २४

तत्र कूपो विदूरेऽभूत्सरस्वत्यास्तटे महान् ।
अथ त्रितो वृकं दृष्ट्वा पथि तिष्ठन्तमग्रतः२५
तद्भयादपसर्पन्वै तस्मिन्कूपे पपात ह ।
अगाधे सुमहाघोरे सर्वभूतभयङ्करे ॥ २६
त्रितस्ततो महाराज कूपस्थो मुनिसत्तमः ।
आर्तनादं ततश्चक्रे तौ तु शुश्रुवतुर्मुनी ॥ २७
तं ज्ञात्वा पतितं कूपे भ्रातरावेकतद्वितौ ।
वृकत्रासाच्च लोभाच्च समुत्सृज्य प्रजग्मतुः ॥
भ्रातृभ्यां पशुलुब्धाभ्यामुत्सृष्टः स महातपाः
उदपाने तदा राजन्निर्जले पांसुसंवृते ॥ २९
त्रित आत्मानमालक्ष्य कूपे वीरुत्तृणावृते ।
निमग्नं भरतश्रेष्ठ नरके दुष्कृती यथा ॥ ३०
स बुद्ध्याऽगणयत्प्राज्ञो मृत्योर्भीतो ह्यसोमपः
सोमः कथं तु पातव्य इहस्थेन मया भवेत् ३१
स एवमभिनिश्चित्य तस्मिन्कूपे महातपाः ।
ददर्श वीरुधं तत्र लम्बमानां यदृच्छया ३२
पांशुग्रस्ते ततः कूपे विचिन्त्य सलिलं मुनिः
अग्नीन्सङ्कल्पयामास होत्रे चात्मानमेव च ॥
ततस्तां वीरुधं सोमं सङ्कल्प्य सुमहातपाः ।
ऋचो यजूंषि सामानि मनसा चिन्तयन्मुनिः

ग्रावाणः शर्कराः कृत्वा
प्रचक्रेऽभिषवं नृप ।
आज्यं च सलिलं चक्रे
भागांश्च त्रिदिवौकसाम् ॥ ३५

सोमस्याभिषवं कृत्वा चकार विपुलं ध्वनिम्
स चाविशद्दिवं राजन्पुनः शब्दस्त्रितस्य वै ॥
समवाप्य च तं यज्ञं यथोक्तं ब्रह्मवादिभिः ।
वर्तमाने महायज्ञे त्रितस्य सुमहात्मनः ॥ ३७
आविग्नं त्रिदिवं सर्वं कारणं च न बुद्ध्यते ।
ततः सुतुमुलं शब्दं शुश्रावाथ बृहस्पतिः ३८

श्रुत्वा चैवाब्रवीत्सर्वान्
देवान् देवपुरोहितः ।
त्रितस्य वर्तते यज्ञ-
स्तत्र गच्छामहे सुराः ॥ ३९

स हि क्रुद्धः सृजेदन्यान्देवानपि महातपाः ।
तच्छ्रुत्वा वचनं तस्य सहिताः सर्वदेवताः ॥
प्रययुस्तत्र यत्रासौ त्रितयज्ञः प्रवर्तते ।
ते तत्र गत्वा विबुधास्तं कूपं यत्र स त्रितः
ददृशुस्तं महात्मानं दीक्षितं यज्ञकर्मसु ।
दृष्ट्वा चैनं महात्मानं श्रिया परमया युतम् ॥
ऊचुश्चैनं महाभागं प्राप्ता भागार्थिनो वयम् ।
अथाब्रवीदृषिर्देवान्पश्यध्वं मां दिवौकसः
अस्मिन्प्रतिभये कूपे निमग्नं नष्टचेतसम् ।
ततस्त्रितो महाराज भागांस्तेषां यथाविधि ॥

मन्त्रयुक्तान्समदद-
त्ते च प्रीतास्तदाऽभवन् ।
ततो यथाविधि प्राप्तान्
भागान्प्राप्य दिवौकसः ॥ ४५

प्रीतात्मानो ददुस्तस्मै वरान्यान्मनसेच्छति
स तु वव्रे वरं देवांस्त्रातुमर्हथ मामितः ॥ ४६
यश्चेहोपस्पृशेत्कूपे स सोमपगतिं लभेत् ।
तत्र चोर्मिमती राजन्नुत्पपात सरस्वती ॥
तयोत्क्षिप्तः समुत्तस्थौ पूजयंस्त्रिदिवौकसः ।
तथेति चोक्ता विबुधा जग्मू राजन् यथागताः
त्रितश्चाभ्यागमत्प्रीतः स्वमेव निलयं तदा ।
क्रुद्धस्तु स समासाद्य तावृषी भ्रातरौ तदा ॥
उवाच परुषं वाक्यं शशाप च महातपाः ।
पशुलुब्धौ युवां यस्मान्मामुत्सृज्य प्रधावितौ
तस्माद्वृकाकृती रौद्रौ दंष्ट्रिणावभितश्चरौ ।
भवितारौ मया शप्तौ पापेनानेन कर्मणा ॥
प्रसवश्चैव युवयोर्गोलाङ्गूलर्क्षवानराः ।
इत्युक्तेन तदा तेन क्षणादेव विशांपते ॥ ५२
तथाभूतावदृश्येतां वचनात्सत्यवादिनः ।
तत्राप्यमितविक्रान्तः स्पृष्ट्वा तोयं हलायुधः ॥

दत्वा च विविधान् दायान्
पूजयित्वा च वै द्विजान् ।
उदपानं च तं वीक्ष्य
प्रशस्य च पुनः पुनः ।
नदीगतमदीनात्मा
प्राप्तो विनशनं तदा ॥ ५४

इति श्रीमहाभारते शल्यपर्वान्तर्गतगदापर्वणि बलदेवतीर्थयात्रायां त्रिताख्याने षट्त्रिंशोऽध्यायः ॥ ३६ ॥

## ३७

वैशम्पायन उवाच ।
ततो विनशनं राजञ्जगामाथ हलायुधः ।
शूद्राभीरान्प्रतिद्वेषाद्यत्र नष्टा सरस्वती ॥ १
तस्मात्तु ऋषयो नित्यं प्राहुर्विनशनेति च ।
यत्राप्युपस्पृश्य बलः सरस्वत्यां महाबलः ॥२
सुभूमिकं ततोऽगच्छत्सरस्वत्यास्तटे वरे ।
तत्र चाप्सरसः शुभ्रा नित्यकालमतन्द्रिताः
क्रीडाभिर्विमलाभिश्च क्रीडन्ति विमलाननाः
तत्र देवाः सगन्धर्वा मासि मासि जनेश्वर
अभिगच्छन्ति तत्तीर्थं पुण्यं ब्राह्मणसेवितम्
तत्रादृश्यन्त गन्धर्वास्तथैवाप्सरसां गणाः ॥
समेत्य सहिता राजन्यथा प्राप्तं यथासुखम् ।
तत्र मोदन्ति देवाश्च पितरश्च सवीरुधः ॥ ६
पुण्यैः पुष्पैः सदा दिव्यैः कीर्यमाणाः पुनः पुनः
आक्रीडभूमिः सा राजंस्तासामप्सरसां शुभा
सुभूमिकेति विख्याता सरस्वत्यास्तटे वरे ।
तत्र स्नात्वा च दत्वा च वसु विप्राय माधवः
श्रुत्वा गीतं च तद्दिव्यं
वादित्राणां च निःस्वनम् ।
छायाश्च विपुला दृष्ट्वा
देव-गन्धर्व-रक्षसाम् ॥ ९
गन्धर्वाणां ततस्तीर्थमागच्छद्रोहिणीसुतः ।
विश्वावसुमुखास्तत्र गन्धर्वास्तपसान्विताः
नृत्यवादित्रगीतं च कुर्वन्ति सुमनोरमम् ।
तत्र दत्वा हलधरो विप्रेभ्यो विविधं वसु ॥
अजाविकं गो-खरोष्ट्रं सुवर्णं रजतं तथा ।
भोजयित्वा द्विजान्कामैः संतर्प्य च महाधनैः
प्रययौ सहितो विप्रैस्तूयमानश्च माधवः ।
तस्माद्गन्धर्वतीर्थाच्च महाबाहुररिन्दमः ॥१३
गर्गस्रोतो महातीर्थमाजगामैककुण्डली ।
तत्र गर्गेण वृद्धेन तपसा भावितात्मना ॥ १४
कालज्ञानगतिश्चैव ज्योतिषां च व्यतिक्रमः ।
उत्पाता दारुणाश्चैव शुभाश्च जनमेजय ॥ १५
सरस्वत्याः शुभे तीर्थे विदिता वै महात्मना ।
तस्य नाम्ना च तत्तीर्थं गर्गस्रोत इति स्मृतम्
तत्र गर्गं महाभागं ऋषयः सुव्रता नृप ।
उपासांचक्रिरे नित्यं कालज्ञानं प्रति प्रभो
तत्र गत्वा महाराज बलः श्वेतानुलेपनः ।
विधिवद्धि धनं दत्वा मुनीनां भावितात्मनां
उच्चावचांस्तथा भक्ष्यान्विप्रेभ्यो विप्रदाय सः
नीलवासास्तदाऽगच्छच्छंखतीर्थं महायशाः
तत्रापश्यन्महाशंखं महामेरुमिवोच्छ्रितम् ।
श्वेतपर्वतसंकाशं ऋषिसंघैर्निषेवितम् ॥ २०
सरस्वत्यास्तटे जातं नगं तालध्वजो बली ।
यक्षा विद्याधराश्चैव राक्षसाश्चामितौजसः ॥
पिशाचाश्चामितबला यत्र सिद्धाः सहस्रशः ।
ते सर्वे ह्यशनं त्यक्त्वा फलं तस्य वनस्पतेः
व्रतैश्च नियमैश्चैव काले काले स्म भुञ्जते ।
प्राप्तैश्च नियमैस्तैस्तैर्विचरन्तः पृथक् पृथक् ॥
अदृश्यमाना मनुजैर्व्यचरन्पुरुषर्षभ ।
एवं ख्यातो नरव्याघ्र लोकेस्मिन्स वनस्पतिः
ततस्तीर्थं सरस्वत्याः पावनं लोकविश्रुतम् ।
तस्मिंश्च यदुशार्दूलो दत्वा तीर्थे पयस्विनीः २५

---

इति श्रीमहाभारते शल्यान्तर्गतगदापर्वणि नैलकण्ठीये भारतभावदीपे षट्त्रिंशोऽध्यायः ॥ ३६ ॥

३७

तत इति ॥ १ ॥ शुभ्राः शुचयः ॥ ३ ॥ कालज्ञानं प्रति कालज्ञानार्थम् ॥ १७ ॥ शंखं शंखनामानम् ॥२०॥ नगं वृक्षम् ॥ २१ ॥

ताम्रायसानि भाण्डानि
वस्त्राणि विविधानि च ।
पूजयित्वा द्विजांश्चैव
पूजितश्च तपोधनैः ॥ २६
पुण्यं द्वैतवनं राजन्नाजगाम हलायुधः ।
तत्र गत्वा मुनीन् दृष्ट्वा नानावेषधरान्बलः ॥
आप्लुत्य सलिले चापि पूजयामास वै द्विजान्
तथैव दत्वा विप्रेभ्यः परिभोगान् सुपुष्कलान्
ततः प्रायाद्बलो राजन् दक्षिणेन सरस्वतीम्
गत्वा चैवं महाबाहुर्नातिदूरे महायशाः ॥ २९
धर्मात्मा नागधन्वानं तीर्थमागमदच्युतः ।
यत्र पन्नगराजस्य वासुकेः सन्निवेशनम् ॥३०
महाद्युतेर्महाराज बहुभिः पन्नगैर्वृतम् ।
ऋषीणां हि सहस्राणि तत्र नित्यं चतुर्दश ॥
यत्र देवाः समागम्य वासुकिं पन्नगोत्तमम् ।
सर्वपन्नगराजानमभ्यषिञ्चन् यथाविधि ॥३२
पन्नगेभ्यो भयं तत्र विद्यते न स्म पौरव ।
तत्रापि विधिवद्दत्वा विप्रेभ्यो रत्नसञ्चयान्
प्रायात्प्राचीं दिशं तत्र तत्र तीर्थान्यनेकशः ।
सहस्रशतसंख्यानि प्रथितानि पदे पदे ॥ ३४
आप्लुत्य तत्र तीर्थेषु यथोक्तं तत्र चर्षिभिः ।
कृत्वोपवासनियमं दत्वा दानानि सर्वशः ॥
अभिवाद्य मुनींस्तान्वै तत्र तीर्थनिवासिनः ।
उद्दिष्टमार्गः प्रययौ यत्र भूयः सरस्वती ३६
प्राङ्मुखं वै निववृते वृष्टिर्वातहता यथा ।
ऋषीणां नैमिषेयाणामवेक्षार्थं महात्मनाम् ॥
निवृत्तां तां सरिच्छ्रेष्ठां तत्र दृष्ट्वा तु लाङ्गली
बभूव विस्मितो राजन् बलः श्वेतानुलेपनः

जनमेजय उवाच ।

कस्मात्सरस्वती ब्रह्मन्निवृत्ता प्राङ्मुखीभवत्
व्याख्यातमेतदिच्छामि सर्वमध्वर्युसत्तम ॥
कस्मिंश्चित्कारणे तत्र विस्मितो यदुनन्दनः ।
निवृत्ता हेतुना केन कथमेव सरिद्वरा ॥ ४०

वैशम्पायन उवाच ।

पूर्वं कृतयुगे राजन्नैमिषेयास्तपस्विनः ।
वर्तमाने सुविपुले सत्रे द्वादशवार्षिके ॥ ४१
ऋषयो बहवो राजंस्तत्सत्रमभिपेदिरे ।
उषित्वा च महाभागास्तस्मिन्सत्रे यथाविधि
निवृत्ते नैमिषेये वै सत्रे द्वादशवार्षिके ।
आजग्मुर्ऋषयस्तत्र बहवस्तीर्थकारणात् ४३
ऋषीणां बहुलत्वात्तु सरस्वत्या विशांपते ।
तीर्थानि नगरायन्ते कूले वै दक्षिणे तदा ॥
समन्तपञ्चकं यावत्तावत्ते द्विजसत्तमाः ।
तीर्थलोभान्नरव्याघ्र नद्यास्तीरं समाश्रिताः
जुह्वतां तत्र तेषां तु मुनीनां भावितात्मनाम्
स्वाध्यायेनातिमहता बभूवुः पूरिता दिशः ॥
अग्निहोत्रैस्ततस्तेषां क्रियमाणैर्महात्मनाम् ।
अशोभत सरिच्छ्रेष्ठा दीप्यमानैः समन्ततः ॥
वालखिल्या महाराज अश्मकुट्टाश्च तापसाः
दन्तोलूखलिनश्चान्ये प्रसंख्यानास्तथा परे ॥
वायुभक्षा जलाहाराः पर्णभक्षाश्च तापसाः ।
नानानियमयुक्ताश्च तथा स्थण्डिलशायिनः ॥
आसन्वै मुनयस्तत्र सरस्वत्याः समीपतः ।
शोभयन्तः सरिच्छ्रेष्ठां गङ्गामिव दिवौकसः
शतशश्च समापेतुर्ऋषयः सत्रयाजिनः ।
तेऽवकाशं न ददृशुः सरस्वत्या महाव्रताः ५१
ततो यज्ञोपवीतैस्ते तत्तीर्थं निर्मिमाय वै ।
जुहुवुश्चाग्निहोत्रांश्च चक्रुश्च विविधाः क्रियाः
ततस्तमृषिसंघातं निराशं चिन्तयान्वितम् ।
दर्शयामास राजेन्द्र तेषामर्थे सरस्वती ॥ ५३
ततः कुञ्जान् बहून्कृत्वा सन्निवृत्ता सरस्वती
ऋषीणां पुण्यतपसां कारुण्याज्जनमेजय ५४
ततो निवृत्य राजेन्द्र तेषामर्थे सरस्वती ।
भूयः प्रतीच्यभिमुखी प्रसुस्राव सरिद्वरा ॥
अमोघा गमनं कृत्वा तेषां भूयो व्रजाम्यहम् ।
इत्यद्भुतं महच्चक्रे तदा राजन्महानदी ॥ ५६
एवं स कुञ्जो राजन् वै नैमिषीय इति स्मृतः
कुरुश्रेष्ठ कुरुक्षेत्रे कुरुष्व महतीं क्रियाम् ॥ ५७
तत्र कुञ्जान्बहून् दृष्ट्वा निवृत्तां च सरस्वतीम्
बभूव विस्मयस्तत्र रामस्याथ महात्मनः ५८
उपस्पृश्य तु तत्रापि
विधिवद्यदुनन्दनः ।
दत्वा दायान् द्विजातिभ्यो
भाण्डानि विविधानि च ॥ ५९

अपेक्षार्थं इष्टसिद्ध्यर्थम् ॥ ३७ ॥ इच्छामि श्रोतुमिति शेषः ॥ ३९ ॥ यज्ञोपवीतैः यज्ञसूत्रैः । तीर्थं त्रेताग्नीनामुत्तरभागं तीर्थत्वेन श्रौते प्रसिद्धं निर्मिमाय निर्मायेत्यर्थः ॥ ५२ ॥ निराशं सरस्वतीजललाभे इत्यर्थः ॥ ५३ ॥ कुञ्जान् आत्मनो वासस्थानानि तीर्थविशेषानित्यर्थः ॥ ५४ ॥

भक्ष्यं भोज्यं च विविधं ब्राह्मणेभ्यः प्रदाय च
ततः प्रायाद्बलो राजन्पूज्यमानो द्विजातिभिः
सरस्वतीतीर्थवरं नानाद्विजगणायुतम् ।
बदरेङ्गुदकाश्मर्यप्लक्षाश्वत्थबिभीतकैः ६१
कङ्कोलैश्च पलाशैश्च करीरैः पीलुभिस्तथा ।
सरस्वतीतीर्थरुहैस्तरुभिर्विविधैस्तथा ॥ ६२
करूषकवरैश्चैव बिल्वैराम्रातकैस्तथा ।
अतिमुक्तकषण्डैश्च पारिजातैश्च शोभितम् ॥
कदलीवनभूयिष्ठं दृष्टिकान्तं मनोहरम् ।
वाय्वम्बुफलपर्णादैर्दन्तोलूखलिकैरपि ॥ ६४
तथाश्मकुट्टैर्वानेयैर्मुनिभिर्बहुभिर्वृतम् ।
स्वाध्यायघोषसंघुष्टं मृगयूथशताकुलम् ६५
अहिंस्रैर्धर्मपरमैर्नृभिरत्यर्थसेवितम् ।
सप्तसारस्वतं तीर्थमाजगाम हलायुधः ।
यत्र मङ्कणकः सिद्धस्तपस्तेपे महामुनिः ६६

इति श्रीमहाभारते शल्यपर्वान्तर्गतगदापर्वणि बलदेवतीर्थयात्रायां सारस्वतोपाख्याने सप्तत्रिंशोऽध्यायः ॥ ३७ ॥

## ३८

जनमेजय उवाच ।
सप्तसारस्वतं कस्मात्-
कश्च मङ्कणको मुनिः ।
कथं सिद्धः स भगवान्
कश्चास्य नियमोऽभवत् ॥ १
कस्य वंशे समुत्पन्नः किं चाधीतं द्विजोत्तम
एतदिच्छाम्यहं श्रोतुं विधिवद्द्विजसत्तम २
वैशम्पायन उवाच ।
राजन्सप्त सरस्वत्यो याभिर्व्याप्तमिदं जगत्
आहूता बलवद्भिर्हि तत्र तत्र सरस्वती ॥ ३
सुप्रभा काञ्चनाक्षी च विशाला च मनोरमा
सरस्वती चौघवती सुरेणुर्विमलोदका ॥ ४
पितामहस्य महतो वर्तमाने महामखे ।
वितते यज्ञवाटे च संसिद्धेषु द्विजातिषु ॥ ५
पुण्याहघोषैर्विमलैर्वेदानां निनदैस्तथा ।
देवेषु चैव व्यग्रेषु तस्मिन्यज्ञविधौ तदा ॥ ६
तत्र चैव महाराज दीक्षिते प्रपितामहे ।
यजतस्तस्य सत्रेण सर्वकामसमृद्धिना ॥ ७
मनसा चिन्तिता ह्यर्था धर्मार्थकुशलैस्तदा ।
उपतिष्ठन्ति राजेन्द्र द्विजातींस्तत्र तत्र ह ८
जगुश्च तत्र गन्धर्वा ननृतुश्चाप्सरोगणाः ।
वादित्राणि च दिव्यानि वादयामासुरञ्जसा
तस्य यज्ञस्य संपत्त्या तुतुषुर्देवता अपि ।
विस्मयं परमं जग्मुः किमु मानुषयोनयः १०
वर्तमाने तथा यज्ञे पुष्करस्थे पितामहे ।
अब्रुवन्नृषयो राजन्नायं यज्ञो महागुणः ॥ ११
न दृश्यते सरिच्छ्रेष्ठा यस्मादिह सरस्वती ।
तच्छ्रुत्वा भगवान्प्रीतः सस्माराथ सरस्वतीम्
पितामहेन यजता आहूता पुष्करेषु वै ।
सुप्रभा नाम राजेन्द्र नाम्ना तत्र सरस्वती ॥
तां दृष्ट्वा मुनयस्तुष्टास्त्वरायुक्तां सरस्वतीम्
पितामहं मानयन्तीं क्रतुं ते बहु मेनिरे ॥ १४
एवमेषा सरिच्छ्रेष्ठा पुष्करेषु सरस्वती ।
पितामहार्थं संभूता तुष्ट्यर्थं च मनीषिणाम् ॥
नैमिषे मुनयो राजन्समागम्य समासते ।
तत्र चित्राः कथा ह्यासन् वेदं प्रति जनेश्वर
यत्र ते मुनयो ह्यासन्नानास्वाध्यायवेदिनः ।
ते समागम्य मुनयः सस्मरुर्वै सरस्वतीम् ॥
सा तु ध्याता महाराज
ऋषिभिः सत्रयाजिभिः ।
समागतानां राजेन्द्र
सहायार्थं महात्मनाम् ॥ १८
आजगाम महाभागा तत्र पुण्या सरस्वती ।
नैमिषे काञ्चनाक्षी तु मुनीनां सत्रयाजिनाम्
आगता सरितां श्रेष्ठा तत्र भारत पूजिता ।
गयस्य यजमानस्य गयेष्वेव महाक्रतुम् ॥ २०

---

इति श्रीमहाभारते शल्यान्तर्गतगदापर्वणि नैलकण्ठीये भारतभावदीपे सप्तत्रिंशोऽध्यायः ॥ ३७ ॥

३८

सप्तेति ॥ १ ॥ सस्मरुः स्मृतवन्तः ॥ १७ ॥ गयेषु. गयदेशेषु ॥ २० ॥

आहूता सरितां श्रेष्ठा गययज्ञे सरस्वती ।
विशालां तु गयस्याहुर्ऋषयः संशितव्रताः २१
सरित्सा हिमवत्पार्श्वात्प्रस्रुता शीघ्रगामिनी
औद्दालकेस्तथा यज्ञे यजतस्तस्य भारत २२
समेते सर्वतः स्फीते मुनीनां मण्डले तदा ।
उत्तरे कोसला भागे पुण्ये राजन्महात्मनः ॥
उद्दालकेन यजता पूर्वं ध्याता सरस्वती ।
आजगाम सरिच्छ्रेष्ठा तं देशं मुनिकारणात्॥
पूज्यमाना मुनिगणैर्वल्कलाजिनसंवृतैः ।
मनोरमेति विख्याता सा हि तैर्मनसा कृता
सुरेणुर्ऋषभे द्वीपे पुण्ये राजर्षिसेविते ।
कुरोश्च यजमानस्य कुरुक्षेत्रे महात्मनः ॥ २६
आजगाम महाभागा सरिच्छ्रेष्ठा सरस्वती ।
ओघवत्यपि राजेन्द्र वसिष्ठेन महात्मना २७
समाहूता कुरुक्षेत्रे दिव्यतोया सरस्वती ।
दक्षेण यजता चापि गङ्गाद्वारे सरस्वती २८
सुरेणुरिति विख्याता प्रस्रुता शीघ्रगामिनी ।
विमलोदा भगवती ब्रह्मणा यजता पुनः २९
समाहूता ययौ तत्र पुण्ये हैमवते गिरौ ।
एकीभूतास्ततस्तास्तु तस्मिंस्तीर्थे समागताः
सप्तसारस्वतं तीर्थं ततस्तु प्रथितं भुवि ।
इति सप्तसरस्वत्यो नामतः परिकीर्तिताः ॥
सप्त सारस्वतं चैव तीर्थं पुण्यं तथा स्मृतम् ।
शृणु मङ्कणकस्यापि कौमारब्रह्मचारिणः ॥
आपगामवगाढस्य राजन् प्रक्रीडितं महत् ।
दृष्ट्वा यदृच्छया तत्र स्त्रियमंभसि भारत ॥
स्नायन्तीं रुचिरापाङ्गीं
दिग्वाससमनिन्दिताम् ।
सरस्वत्यां महाराज
चस्कन्दे वीर्यमंभसि ॥ ३४
तद्रेतः स तु जग्राह कलशे वै महातपाः ।
सप्तधा प्रविभागं तु कलशस्थं जगाम ह ३५
तत्रर्षयः सप्त जाता जज्ञिरे मरुतां गणाः ।
वायुवेगो वायुबलो वायुहा वायुमण्डलः ३६
वायुज्वालो वायुरेता वायुचक्रश्च वीर्यवान्
एवमेते समुत्पन्ना मरुतां जनयिष्णवः ॥ ३७
इदमत्यद्भुतं राजन् शृण्वाश्चर्यतरं भुवि ।
महर्षेश्चरितं यादृक् त्रिषु लोकेषु विश्रुतम् ॥
पुरा मङ्कणकः सिद्धः कुशाग्रेणेति नः श्रुतम्
क्षतः किल करे राजंस्तस्य शाकरसोऽस्रवत्
स वै शाकरसं दृष्ट्वा हर्षाविष्टः प्रनृत्तवान् ।
ततस्तस्मिन्प्रनृत्ते वै स्थावरं जङ्गमं च यत् ॥
प्रनृत्तमुभय वीर तेजसा तस्य मोहितम् ।
ब्रह्मादिभिः सुरै राजन् ऋषिभिश्च तपोधनैः
विज्ञप्तो वै महादेव ऋषेरर्थे नराधिप ।
नायं नृत्येद्यथा देव तथा त्वं कर्तुमर्हसि ४२
ततो देवो मुनिं दृष्ट्वा हर्षाविष्टमतीव ह ।
सुराणां हितकामार्थं महादेवोऽभ्यभाषत ॥
भो भो ब्राह्मण धर्मज्ञ किमर्थं नृत्यते भवान्।
हर्षस्थानं किमर्थं च तवेदमधिकं मुने ॥ ४४
तपस्विनो धर्मपथे स्थितस्य द्विजसत्तम ।

ऋषिरुवाच ।

किं न पश्यसि मे ब्रह्मन् कराच्छाकरसं स्रुतम्
यं दृष्ट्वा संप्रनृत्तो वै हर्षेण महता विभो ।
तं प्रहस्याब्रवीद्देवो मुनिं रागेण मोहितम् ४६
अहं न विस्मयं विप्र
गच्छामीति प्रपश्य माम् ।
एवमुक्त्वा मुनिश्रेष्ठं
महादेवेन धीमता ॥ ४७
अङ्गुल्यग्रेण राजेन्द्र स्वाङ्गुष्ठस्ताडितोऽभवत्
ततो भस्म क्षताद्राजन्निर्गतं हिमसन्निभम् ॥
तद्दृष्ट्वा व्रीडितो राजन् स मुनिः पादयोर्गतः
मेने देवं महादेवमिदं चोवाच विस्मितः ४९
नान्यं देवादहं मन्ये रुद्रात्परतरं महत् ।
सुरासुरस्य जगतो गतिस्त्वमसि शूलधृक् ॥
त्वया सृष्टमिदं विश्वं वदन्तीह मनीषिणः ।
त्वामेव सर्वं विशति पुनरेव युगक्षये ॥ ५१
देवैरपि न शक्यस्त्वं परिज्ञातुं कुतो मया ।
त्वयि सर्वे स्म दृश्यन्ते भावा ये जगति स्थिताः

---

सुरेणुरुद्देशे षष्ठी : यद्यपि तथापि पञ्चमे स्थाने कीर्त्यते श्लोकानां पौर्वापर्यं वा विज्ञेयम् ॥ २६ ॥ स्नायन्तीं स्नातीम् ॥ ३४ ॥ मरुतां प्राणवायूनां एकोनपञ्चाशतां एतेषां तपसा मरुतोऽदित्यामुत्पन्ना इति कल्पान्तरविषयोऽयमर्थः ॥ ३७ ॥ इदमत्यद्भुतं राजन्नित्यस्य तात्पर्यं योगेन सिद्धस्य कायस्य परिणामान्तरं ह्रासवृद्ध्यादिकं न जायतेऽतस्तत्र प्रविष्टोऽन्नरसोऽपरिणममाण एव देहान्निःसरति तं दृष्ट्वा आत्मनः सिद्धकायत्वं मत्वा मङ्कणको गर्वेण नृत्यति तदेव क्षयशून्यत्वं देहस्य महती योगसिद्धिः देहस्य भस्मभूतत्वं तु महीयसी सिद्धिरित्येतद्रुद्रो दर्शयंस्तस्य गर्वं परिहरतीति ॥ ३८ ॥

त्वामुपासन्त वरदं देवा ब्रह्मादयोऽनघ।
सर्वस्त्वमसि देवानां कर्ता कारयिता च ह॥
त्वत्प्रसादात्सुराः सर्वे मोदन्तीहाकुतोभयाः
एवं स्तुत्वा महादेवं स ऋषिः प्रणतोऽभवत्।
यदिदं चापलं देव कृतमेतत्स्मयादिकम्।
ततः प्रसादयामि त्वां तपो मे न क्षरेदिति
ततो देवः प्रीतमनास्तमृषिं पुनरब्रवीत्।
तपस्ते वर्धतां विप्र मत्प्रसादात्सहस्रधा ५६
आश्रमे चेह वत्स्यामि त्वया सार्धमहं सदा
सप्तसारस्वते चास्मिन्यो मामर्चिष्यते नरः॥
न तस्य दुर्लभं किञ्चिद्भवितेह परत्र वा।
सारस्वतं च ते लोकं गमिष्यन्ति न संशयः
एतन्मङ्कणकस्यापि चरितं भूरितेजसः।
स हि पुत्रः सुकन्यायामुत्पन्नो मातरिश्वना

इति श्रीमहाभारते शल्यपर्वान्तर्गतगदापर्वणि बलदेवतीर्थयात्रायां सारस्वतोपाख्याने अष्टात्रिंशोऽध्यायः॥ ३८॥

## ३९

वैशम्पायन उवाच।
उषित्वा तत्र रामस्तु संपूज्याश्रमवासिनः
तथा मङ्कणके प्रीतिं शुभां चक्रे हलायुधः॥ १
दत्त्वा दानं द्विजातिभ्यो रजनीं तामुपोष्य च
पूजितो मुनिसङ्घैश्च प्रातरुत्थाय लाङ्गली॥ २
अनुज्ञाप्य मुनीन्सर्वान् स्पृष्ट्वा तोयं च भारत।
प्रययौ त्वरितो रामस्तीर्थहेतोर्महाबलः॥ ३
ततस्त्वौशनसं तीर्थमाजगाम हलायुधः।
कपालमोचनं नाम यत्र मुक्तो महामुनिः॥ ४
महता शिरसा राजन् ग्रस्तजङ्घो महोदरः।
राक्षसस्य महाराज रामक्षिप्तस्य वै पुरा॥ ५
तत्र पूर्वं तपस्तप्तं काव्येन सुमहात्मना।
यत्रास्य नीतिरखिला प्रादुर्भूता महात्मनः ६
यत्रस्थश्चिन्तयामास दैत्यदानवविग्रहम्।
तत्प्राप्य च बलो राजंस्तीर्थप्रवरमुत्तमम्॥ ७
विधिवद्वै ददौ वित्तं ब्राह्मणानां महात्मनाम्
जनमेजय उवाच।
कपालमोचनं ब्रह्मन् कथं यत्र महामुनिः॥८
मुक्तः कथं चास्य शिरो लग्नं केन च हेतुना।
वैशम्पायन उवाच।
पुरा वै दण्डकारण्ये राघवेण महात्मना९
वसता राजशार्दूल राक्षसान् शमयिष्यता।
जनस्थाने शिरश्छिन्नं राक्षसस्य दुरात्मनः॥
क्षुरेण शितधारेण उत्पपात महावने।
महोदरस्य तल्लग्नं जंघायां वै यदृच्छया॥ ११
वने विचरतो राजन्नस्थि भित्त्वाऽस्फुरत्तदा।
स तेन लग्नेन तदा द्विजातिर्न शशाक ह १२
अभिगन्तुं महाप्राज्ञस्तीर्थान्यायतनानि च।
स पूतिना विस्रवता वेदनार्तो महामुनिः१३
जगाम सर्वतीर्थानि पृथिव्यां चेति नः श्रुतम्
स गत्वा सरितः सर्वाः समुद्रांश्च महातपाः
कथयामास तत्सर्वमृषीणां भावितात्मनाम्।
आप्लुत्य सर्वतीर्थेषु न च मोक्षमवाप्तवान्॥१५
स तु शुश्राव विप्रेन्द्र मुनीनां वचनं महत्।
सरस्वत्यास्तीर्थवरं ख्यातमौशनसं तदा॥ १६
सर्वपापप्रशमनं सिद्धिक्षेत्रमनुत्तमम्।
स तु गत्वा ततस्तत्र तीर्थमौशनसं द्विजः१७
तत औशनसे तीर्थे तस्योपस्पृशतस्तदा।
तच्छिरश्चरणं मुक्त्वा पपातान्तर्जले तदा॥
विमुक्तस्तेन शिरसा परं सुखमवाप ह।
स चाप्यन्तर्जले मूर्धा जगामादर्शनं विभो॥
ततः स विशिरा राजन्पूतात्मा वीतकल्मषः
आजगामाश्रमं प्रीतः कृतकृत्यो महोदरः॥२०
सोऽथ गत्वाऽऽश्रमं पुण्यं विप्रमुक्तो महातपाः
कथयामास तत्सर्वमृषीणां भावितात्मनाम्॥
ते श्रुत्वा वचनं तस्य ततस्तीर्थस्य मानद।
कपालमोचनमिति नाम चक्रुः समागताः २२

---

स्मयादिकं गर्वादिकम्॥ ५५॥ इति श्रीमहाभारते शल्यान्तर्गतगदापर्वणि नैलकण्ठीये भारतभावदीपे अष्टत्रिंशोऽध्यायः॥ ३८॥

३९

उषित्वेति॥ १॥

स चापि तीर्थप्रवरं पुनर्गत्वा महानृषिः ।
पीत्वा पयः सुविपुलं सिद्धिमायात्तदा मुनिः
तत्र दत्त्वा बहून् दायान्विप्रान् संपूज्य माधवः
जगाम वृष्णिप्रवरो रुषङ्गोराश्रमं तदा ॥ २४
यत्र तप्तं तपो घोरमार्ष्टिषेणेन भारत ।
ब्राह्मण्यं लब्धवांस्तत्र विश्वामित्रो महामुनिः
सर्वकामसमृद्धं च तदाश्रमपदं महत् ।
मुनिभिर्ब्राह्मणैश्चैव सेवितं सर्वदा विभो ॥ २६
ततो हलधरः श्रीमान् ब्राह्मणैः परिवारितः ।
जगाम तत्र राजेन्द्र रुषङ्गुस्तनुमत्यजत् ॥ २७
रुषङ्गुर्ब्राह्मणो वृद्धस्तपोनित्यश्च भारत ।
देहन्यासे कृतमना विचिन्त्य बहुधा तदा ॥
ततः सर्वानुपादाय तनयान्वै महातपाः ।
रुषङ्गुरब्रवीत्तत्र नयध्वं मां पृथूदकम् ॥ २९
विज्ञायातीतवयसं रुषङ्गुं ते तपोधनाः ।
तं च तीर्थमुपानिन्युः सरस्वत्यास्तपोधनम् ॥
स तैः पुत्रैस्तदा धीमानानीतो वै सरस्वतीम् ।
पुण्यां तीर्थशतोपेतां विप्रसङ्घैर्निषेविताम् ३१
स तत्र विधिना राजन्नाप्लुत्य सुमहातपाः ।
ज्ञात्वा तीर्थगुणांश्चैव प्राहेदमृषिसत्तमः ॥ ३२
सुप्रीतः पुरुषव्याघ्र सर्वान्पुत्रानुपासतः ।
सरस्वत्युत्तरे तीरे यस्त्यजेदात्मनस्तनुम् ॥ ३३
पृथूदके जप्यपरो नैनं श्वोमरणं तपेत् ।
तत्राप्लुत्य स धर्मात्मा उपस्पृश्य हलायुधः ॥
दत्त्वा चैव बहून्दायान् विप्राणां विप्रवत्सलः
ससर्ज यत्र भगवाँल्लोकाँल्लोकपितामहः ॥ ३५
यत्रार्ष्टिषेणः कौरव्य ब्राह्मण्यं संशितव्रतः ।
तपसा महता राजन् प्राप्तवानृषिसत्तमः ३६
सिन्धुद्वीपश्च राजर्षिर्देवापिश्च महातपाः ।
ब्राह्मण्यं लब्धवान्यत्र विश्वामित्रस्तथा मुनिः
महातपस्वी भगवानुग्रतेजा महातपाः ।
तत्राजगाम बलवान् बलभद्रः प्रतापवान् ३८

इति श्रीमहाभारते शल्यपर्वान्तर्गतगदापर्वणि बलदेवतीर्थयात्रायां सारस्वतोपाख्याने ऊनचत्वारिंशोऽध्यायः ॥ ३९ ॥

## ४०

जनमेजय उवाच ।
कथमार्ष्टिषेणो भगवान् विपुलं तप्तवांस्तपः
सिंधुद्वीपः कथं चापि ब्राह्मण्यं लब्धवांस्तदा
देवापिश्च कथं ब्रह्मन् विश्वामित्रश्च सत्तम ।
तन्ममाचक्ष्व भगवन्परं कौतूहलं हि मे ॥ २
वैशम्पायन उवाच ।
पुरा कृतयुगे राजन्नार्ष्टिषेणो द्विजोत्तमः ।
वसन् गुरुकुले नित्यं नित्यमध्ययने रतः ॥ ३
तस्य राजन् गुरुकुले वसतो नित्यमेव च ।
समाप्तिं नागमद्विद्या नापि वेदा विशांपते ॥ ४
स निर्विण्णस्ततो राजंस्तपस्तेपे महातपाः ।
ततो वै तपसा तेन प्राप्य वेदाननुत्तमान् ॥ ५
स विद्वान् वेदयुक्तश्च सिद्धश्चाप्यृषिसत्तमः ।
तत्र तीर्थे वरान्प्रादात्त्रीनेव सुमहातपाः ॥ ६
अस्मिंस्तीर्थे महानद्या अद्यप्रभृति मानवः ।
आप्लुतो वाजिमेधस्य फलं प्राप्स्यति पुष्कलं
अद्यप्रभृति नैवात्र भयं व्यालाद्भविष्यति ।
अपि चाल्पेन कालेन फलं प्राप्स्यति पुष्कलं
एवमुक्त्वा महातेजा जगाम त्रिदिवं मुनिः ।
एवं सिद्धः स भगवानार्ष्टिषेणः प्रतापवान् ९
तस्मिन्नेव तदा तीर्थे सिन्धुद्वीपः प्रतापवान् ।
देवापिश्च महाराज ब्राह्मण्यं प्रापतुर्महत् ॥ १०
तथा च कौशिकस्तात तपोनित्यो जितेन्द्रियः
तपसा वै सुतप्तेन ब्राह्मणत्वमवाप्तवान् ॥ ११
गाधिर्नाम महानासीत्क्षत्रियः प्रथितो भुवि ।
तस्य पुत्रोऽभवद्राजन् विश्वामित्रः प्रतापवान्

---

श्वोमरणं तपेत् अक्षयं स्वर्गमाप्नोतीत्यर्थः ॥ ३४ ॥ ब्राह्मणं ब्रह्मसंघातो वेदसमूह इति यावत् । ततः स्वार्थे ष्यञ् 'ब्राह्मणं ब्रह्मसंघाते' इति मेदिनी ॥ ३६ ॥ इति श्रीमहाभारते शल्यान्तर्गतगदापर्वणि नैलकण्ठीये भारतभावदीपे ऊनचत्वारिंशोऽध्यायः ॥ ३९ ॥

४०

कथमिति ॥ १ ॥

स राजा कौशिकस्तात महायोग्यमभवत्किल
स पुत्रमभिषिच्याथ विश्वामित्रं महातपाः १३
देहन्यासे मनश्चक्रे तमूचुः प्रणताः प्रजाः ।
न गन्तव्यं महाप्राज्ञ त्राहि चास्मान्महाभयात्
एवमुक्तः प्रत्युवाच ततो गाधिः प्रजास्ततः ॥
विश्वस्य जगतो गोप्ता भविष्यति सुतो मम
इत्युक्त्वा तु ततो गाधि-
र्विश्वामित्रं निवेश्य च
जगाम त्रिदिवं राजन्
विश्वामित्रोऽभवन्नृपः
न स शक्नोति पृथिवीं यत्नवानपि रक्षितुम्।
ततः शुश्राव राजा स राक्षसेभ्यो महाभयम्
निर्ययौ नगराच्चापि चतुरङ्गबलान्वितः ।
स गत्वा दूरमध्वानं वसिष्ठाश्रममभ्ययात् १८
तस्य ते सैनिका राजंश्चक्रुस्तत्रानयान्बहून् ।
ततस्तु भगवान्विप्रो वसिष्ठोऽऽश्रममभ्ययात्
ददृशेऽथ ततः सर्वं भज्यमानं महावनम् ।
तस्य क्रुद्धो महाराज वसिष्ठो मुनिसत्तमः ॥
सृजस्व शबरान् घोरानिति स्वां गामुवाच ह।
तथोक्ता साऽसृजद्धेनुः पुरुषान् घोरदर्शनान्
ते तु तद्बलमासाद्य बभञ्जुः सर्वतोदिशम् ।
तच्छ्रुत्वा विद्रुतं सैन्यं विश्वामित्रस्तु गाधिजः
तपः परं मन्यमान-
स्तपस्येव मनो दधे ।

सोऽस्मिंस्तीर्थवरे राजन्
सरस्वत्याः समाहितः ॥ २३
नियमैश्चोपवासैश्च
कर्षयन् देहमात्मनः ।
जलाहारो वायुभक्षः
पर्णाहारश्च सोऽभवत् ॥ २४
तथा स्थण्डिलशायी च
ये चान्ये नियमाः पृथक् ।
असकृत्तस्य देवास्तु
व्रतविघ्नं प्रचक्रिरे ॥ २५
न चास्य नियमाद्बुद्धिरपयाति महात्मनः ।
ततः परेण यत्नेन तप्त्वा बहुविधं तपः॥ २६
तेजसा भास्कराकारो गाधिजः समपद्यत ।
तपसा तु तथा युक्तं विश्वामित्रं पितामहः२७
अमन्यत महातेजा वरदो वरमस्य तत् ।
स तु वव्रे वरं राजन् स्यामहं ब्राह्मणस्त्विति
तथेति चाब्रवीद्ब्रह्मा सर्वलोकपितामहः ।
स लब्ध्वा तपसोग्रेण ब्राह्मणत्वं महायशाः ॥
विचचार महीं कृत्स्नां कृतकामः सुरोपमः ।
तस्मिंस्तीर्थवरे रामः प्रदाय विविधं वसु ३०
पयस्विनीस्तथा धेनूर्यानानि शयनानि च ।
अथ वस्त्राण्यलङ्कारं भक्ष्यं पेयं च शोभनम् ॥
अददन्मुदितो राजन् पूजयित्वा द्विजोत्तमान्
ययौ राजंस्ततो रामो बकस्याश्रममन्तिकात्
यत्र तेपे तपस्तीव्रं दाल्भ्यो बक इति श्रुतिः॥

इति श्रीमहाभारते शल्यपर्वान्तर्गतगदापर्वणि बलदेवतीर्थयात्रायां सारस्वतोपाख्याने चत्वारिंशोऽध्यायः ॥ ४० ॥

## ४१

वैशम्पायन उवाच ।
ब्रह्मयोनेरवाकीर्णं जगाम यदुनन्दनः ।
यत्र दाल्भ्यो बको राजन्नाश्रमस्थो महातपाः
जुहाव धृतराष्ट्रस्य राष्ट्रं वैचित्रवीर्यिणः ।

तपसा घोररूपेण कर्षयन् देहमात्मनः ॥ २
क्रोधेन महताऽऽविष्टो धर्मात्मा वै प्रतापवान्
पुरा हि नैमिषीयाणां सत्रे द्वादशवार्षिके॥ ३

इति श्रीमहाभारते शल्यान्तर्गतगदापर्वणि नैलकण्ठीये भारतभावदीपे चत्वारिंशोऽध्यायः ॥ ४० ॥

४१

ब्रह्मेति । ब्रह्मयोनेः ब्राह्मण्योत्पादकात्तीर्थादवाकीर्णं नाम दाल्भ्यसेवितं तीर्थं जगाम ॥१॥ तस्यावाकीर्णत्वमाह- जुहावेत्यादिना। अवाकीर्यन्ते नीचैरवपात्यन्ते शत्रवोऽस्मिन्नित्यवाकीर्णमित्यर्थः । वैचित्रवीर्यिणः विचित्रवीर्य एव वैचित्रवीर्यः स पितृत्वेनास्त्यस्य तस्यैवेत्यर्थः ॥ २ ॥ प्रतापवान् राष्ट्रं जुहावेति संबंधः। सत्रे वृत्ते निवृत्ते सतीदुत्तरेण संबंधः ॥ ३ ॥

वृत्ते विश्वजितोऽन्ते वै पञ्चालानृषयोऽगमन्
तत्रेश्वरमयाचन्त दक्षिणार्थं मनस्विनः ॥ ४
बलान्वितान्वत्सतरान्निर्व्याधीनेकविंशतिं
तानब्रवीद्बको दाल्भ्यो विभजध्वं पशूनिति
पशूनेतानहं त्यक्त्वा
भिक्षिष्ये राजसत्तमम्
एवमुक्त्वा ततो राजन्
ऋषीन्सर्वान् प्रतापवान् ॥ ६
जगाम धृतराष्ट्रस्य भवनं ब्राह्मणोत्तमः ।
स समीपगतो भूत्वा धृतराष्ट्रं जनेश्वरम् ॥७
अयाचत पशून् दाल्भ्यः
स चैनं रुषितोऽब्रवीत् ।
यदृच्छया मृता दृष्ट्वा
गास्तदा नृपसत्तमः ॥ ८
एतान्पशून्नय क्षिप्रं
ब्रह्मबन्धो यदीच्छसि ।
ऋषिस्तथा वचः श्रुत्वा
चिन्तयामास धर्मवित् ॥ ९
अहो बत नृशंसं वै वाक्यमुक्तोऽस्मि संसदि
चिन्तयित्वा मुहूर्तेन रोषाविष्टो द्विजोत्तमः
मतिं चक्रे विनाशाय धृतराष्ट्रस्य भूपतेः ।
सतुत्कृत्य मृतानां वै मांसानि मुनिसत्तमः॥
जुहाव धृतराष्ट्रस्य राष्ट्रं नरपतेः पुरा ।
अवाकीर्णे सरस्वत्यास्तीर्थे प्रज्वाल्य पावकं
बको दाल्भ्यो महाराज नियमं परमं स्थितः
स तैरेव जुहावास्य राष्ट्रं मांसैर्महातपाः॥ १३
तस्मिंस्तु विधिवत्सत्रे संप्रवृत्ते सुदारुणे ।
अक्षीयत ततो राष्ट्रं धृतराष्ट्रस्य पार्थिव॥ १४
ततः प्रक्षीयमाणं तद्राज्यं तस्य महीपतेः ।
छिद्यमानं यथानन्तं वनं परशुना विभो॥ १५
बभूवापद्गतं तच्च व्यवकीर्णमचेतनम् ।
दृष्ट्वा तथाऽवकीर्णं तु राष्ट्रं स मनुजाधिपः१६
बभूव दुर्मना राजंश्चिन्तयामास च प्रभुः ।
मोक्षार्थमकरोद्यत्नं ब्राह्मणैः सहितः पुरा॥ १७
न च श्रेयोऽध्यगच्छत्तु क्षीयते राष्ट्रमेव च ।
यदा स पार्थिवः खिन्नस्ते च विप्रास्तदानघ
यदा चापि न शक्नोति राष्ट्रं मोक्षयितुं नृप ।

अथ वैप्राश्निकांस्तत्र पप्रच्छ जनमेजय ॥१९
ततो वैप्राश्निकाः प्राहुः पशुं विप्रकृतस्त्वया
मांसैरभिजुहोतीति तव राष्ट्रं मुनिर्बकः॥ २०
तेन ते हूयमानस्य राष्ट्रस्यास्य क्षयो महान्।
तस्यैतत्तपसः कर्म येन तेऽद्य लयो महान् ॥
अपां कुञ्जे सरस्वत्यास्तं प्रसादय पार्थिव ।
सरस्वतीं ततो गत्वा स राजा बकमब्रवीत् ॥
निपत्य शिरसा भूमौ प्राञ्जलिर्भरतर्षभ ।
प्रसादये त्वां भगवन्नपराधं क्षमस्व मे ॥ २३
मम दीनस्य लुब्धस्य मौर्ख्येण हतचेतसः ।
त्वं गतिस्त्वं च मे नाथः प्रसादं कर्तुमर्हसि
तं तथा विलपन्तं तु शोकोपहतचेतसम् ।
दृष्ट्वा तस्य कृपा जज्ञे राष्ट्रं तस्य व्यमोचयत् ॥
ऋषिः प्रसन्नस्तस्याभूत्संरंभं च विहायसः ।
मोक्षार्थं तस्य राज्यस्य जुहाव पुनराहुतिम्॥
मोक्षयित्वा ततो राष्ट्रं प्रतिगृह्य पशून्बहून् ।
हृष्टात्मा नैमिषारण्यं जगाम पुनरेव सः २७
धृतराष्ट्रोऽपि धर्मात्मा स्वस्थचेता महामनाः
स्वमेव नगरं राजन्प्रतिपेदे महर्द्धिमत् ॥ २८
तत्र तीर्थे महाराज बृहस्पतिरुदारधीः ।
असुराणामभावाय भवाय च दिवौकसाम् ॥
मांसैरभिजुहावेष्टिमक्षीयन्त ततोऽसुराः ।
दैवतैरपि संभग्ना जितकाशिभिराहवे ॥ ३०
तत्रापि विधिवद्दत्त्वा ब्राह्मणेभ्यो महायशाः
वाजिनः कुञ्जरांश्चैव रथांश्चाश्वतरीयुतान् ॥
रत्नानि च महार्हाणि धनं धान्यं च पुष्कलम्
ययौ तीर्थं महाबाहुर्यायातं पृथिवीपते ॥ ३२
तत्र यज्ञे ययातेश्च महाराज सरस्वती ।
सर्पिः पयश्च सुस्राव नाहुषस्य महात्मनः ३३
तत्रेष्ट्वा पुरुषव्याघ्रो ययातिः पृथिवीपतिः ।
अक्रामदूर्ध्वं मुदितो लेभे लोकांश्च पुष्कलान्
पुनस्तत्र च राज्ञस्तु ययातेर्यजतः प्रभोः ।
औदार्यं परमं कृत्वा भक्तिं चात्मनि शाश्वतीम्
ददौ कामान् ब्राह्मणेभ्यो
यान् यान् यो मनसेच्छति ।
यो यत्र स्थित एवेह
आहूतो यज्ञसंस्तरे ॥ ३६

---

पञ्चालान् विश्वजितो यज्ञस्यान्ते अगमन् । पञ्चालराजानं ययुरित्यर्थः । ईश्वरं पञ्चालराजम् ॥ ४ ॥ एतान् पञ्चालराजदत्तान् स्वयं तत्र भागं न गृहीतवान् इत्यर्थः ॥ ६ ॥ यदृच्छयेति गाः बलीवर्दान् धेनूश्च ॥ ८ ॥ तत्र तीर्थे इति । शत्रुनाशकामैस्तत्र होमजपादिकं कर्तव्यमित्याख्यानतात्पर्यम् ॥ २९ ॥

तस्य तस्य सरिच्छ्रेष्ठा गृहादिशयनादिकम्।
षड्रसं भोजनं चैव दानं नानाविधं तथा ॥ ३७
ते मन्यमाना राजंस्तु संप्रदानमनुत्तमम् ।
राजानं तुष्टुवुः प्रीता दत्वा चैवाशिषः शुभाः
तत्र देवाः सगन्धर्वाः प्रीता यज्ञस्य संपदा ।
विस्मिता मानुषाश्चासन् दृष्ट्वा तां यज्ञसंपदम्
ततस्तालकेतुर्महाधर्मकेतु-
महात्मा कृतात्मा महादाननित्यः ।
वसिष्ठापवाहं महाभीमवेगं
धृतात्मा जितात्मा समभ्याजगाम ॥

इति श्रीमहाभारते शल्यपर्वान्तर्गतगदापर्वणि बलदेवतीर्थयात्रायां सारस्वतोपाख्याने एकचत्वारिंशोऽध्यायः ॥ ४१ ॥

## ४२

जनमेजय उवाच ।
वसिष्ठस्यापवाहोऽसौ भीमवेगः कथं नु सः
किमर्थं च सरिच्छ्रेष्ठा तमृषिं प्रत्यवाहयत् १
कथमस्याभवद्वैरं कारणं किं च तत्प्रभो ।
शंस पृष्टो महाप्राज्ञ न हि तृप्यामि कथ्यति
वैशम्पायन उवाच ।
विश्वामित्रस्य विप्रर्षेर्वसिष्ठस्य च भारत ।
भृशं वैरमभूद्राजंस्तपःस्पर्धाकृतं महत् ॥ ३
आश्रमो वै वसिष्ठस्य स्थाणुतीर्थेऽभवन्महान्
पूर्वतः पार्श्वतश्चासीद्विश्वामित्रस्य धीमतः ४
यत्र स्थाणुर्महाराज तप्तवान्परमं तपः ।
तत्रास्य कर्म तद्घोरं प्रवदन्ति मनीषिणः ॥ ५
यत्रेष्ट्वा भगवान् स्थाणुः पूजयित्वा सरस्वतीम्
स्थापयामास तत्तीर्थं स्थाणुतीर्थमिति प्रभो ६
तत्र तीर्थे सुराः स्कन्दमभ्यषिञ्चन्नराधिप ।
सैनापत्येन महता सुरारिविनिबर्हणम् ॥ ७
तस्मिन्सारस्वते तीर्थे विश्वामित्रो महामुनिः
वसिष्ठं चालयामास तपसोग्रेण तच्छृणु ८
विश्वामित्रवसिष्ठौ तावहन्यहनि भारत ।
स्पर्धां तपःकृतां तीव्रां चक्रतुस्तौ तपोधनौ ९
तत्राप्यधिकसन्तापो विश्वामित्रो महामुनिः
दृष्ट्वा तेजो वसिष्ठस्य चिन्तामभिजगाम ह ॥
तस्य बुद्धिरियं ह्यासीद्धर्मनित्यस्य भारत ।
इयं सरस्वती तूर्णं मत्समीपं तपोधनम् ॥ ११
आनयिष्यति वेगेन वसिष्ठं तपतां वरम् ।
इहागतं द्विजश्रेष्ठं हनिष्यामि न संशयः १२
एवं निश्चित्य भगवान्विश्वामित्रो महामुनिः
सस्मार सरितां श्रेष्ठां क्रोधसंरक्तलोचनः ॥
सा ध्याता मुनिना तेन व्याकुलत्वं जगाम ह
जज्ञे चैनं महावीर्यं महाकोपं च भाविनी ॥
तत एनं वेपमाना विवर्णा प्राञ्जलिस्तदा ।
उपतस्थे मुनिवरं विश्वामित्रं सरस्वती ॥ १०
हतवीरा यथा नारी
साऽभवद्दुःखिता भृशम् ।
ब्रूहि किं करवाणीति
प्रोवाच मुनिसत्तमम् ॥ १६
तामुवाच मुनिः क्रुद्धो वसिष्ठं शीघ्रमानय ।
यावदेनं निहन्म्यद्य तच्छ्रुत्वा व्यथिता नदी
प्राञ्जलिं तु ततः कृत्वा पुण्डरीकनिभेक्षणा
प्राकम्पत भृशं भीता वायुनेवाहता लता ॥
तथारूपां तु तां दृष्ट्वा मुनिराह महानदीम् ।
अविचारं वसिष्ठं त्वमानयस्वान्तिकं मम १९
सा तस्य वचनं श्रुत्वा
ज्ञात्वा पापं चिकीर्षितम् ।
वसिष्ठस्य प्रभावं च
जानन्त्यप्रतिमं भुवि ॥ २०
साऽभिगम्य वसिष्ठं च इदमर्थमचोदयत् ।
यदुक्ता सरितां श्रेष्ठा विश्वामित्रेण धीमता

---

इति श्रीमहाभारते शल्यान्तर्गतगदापर्वणि नैलकण्ठीये भारतभावदीपे एकचत्वारिंशोऽध्यायः ॥ ४१ ॥

४२

वसिष्ठस्येति । अपोह्यते तीरे प्रास्यतेऽनेनेत्यपवाहस्तीर्थविशेषः ॥ १ ॥ कथ्यति त्वयि कथयति सति ॥ २ ॥

उभयोः शापयोर्भीता
वेपमाना पुनः पुनः ।
चिन्तयित्वा महाशाप-
मृषिवित्रासिता भृशम् ॥ २२
तां कृशां च विवर्णां च
दृष्ट्वा चिन्तासमन्विताम् ।
उवाच राजन् धर्मात्मा
वसिष्ठो द्विपदां वरः ॥ २३
वसिष्ठ उवाच ।
पाह्यात्मानं सरिच्छ्रेष्ठे
वह मां शीघ्रगामिनी ।
विश्वामित्रः शपेद्धि त्वां
मा कृथास्त्वं विचारणाम् ॥ २४
तस्य तद्वचनं श्रुत्वा
कृपाशीलस्य सा सरित् ।
चिन्तयामास कौरव्य
किं कृत्वा सुकृतं भवेत् ॥ २५
तस्याश्चिन्ता समुत्पन्ना
वासिष्ठो मय्यतीव हि ।
कृतवान् हि दयां नित्यं
तस्य कार्यं हितं मया ॥ २६
अथ कूले स्वके राजन्
जपन्तमृषिसत्तमम् ।
जुह्वानं कौशिकं प्रेक्ष्य
सरस्वत्यभ्यचिन्तयत् ॥ २७
इदमन्तरमित्येवं ततः सा सरितां वरा ।
कूलापहारमकरोत्स्वेन वेगेन सा सरित् ॥
तेन कूलापहारेण मैत्रावरुणिरौह्यत ।
उह्यमानः स तुष्टाव तदा राजन् सरस्वतीम्
पितामहस्य सरसः प्रवृत्तासि सरस्वति ।
व्याप्तं चेदं जगत्सर्वं तवैवांभोभिरुत्तमैः ३०
त्वमेवाकाशगा देवि मेघेषु सृजसे पयः ।
सर्वाश्चापस्त्वमेवेति त्वत्तो वयमधीमहि ३१
पुष्टिर्द्युतिस्तथा कीर्तिः सिद्धिर्बुद्धिरुमा तथा
त्वमेव वाणी स्वाहा त्वं तवायत्तमिदं जगत्
त्वमेव सर्वभूतेषु वससीह चतुर्विधा ।
एवं सरस्वती राजंस्तूयमाना महर्षिणा॥ ३३
वेगेनोवाह तं विप्रं विश्वामित्राश्रमं प्रति ।
न्यवेदयत चाभीक्ष्णं विश्वामित्राय तं मुनिम्
तमानीतं सरस्वत्या दृष्ट्वा कोपसमन्वितः ।
अथान्वेषत्प्रहरणं वसिष्ठान्तकरं तदा ॥ ३५
तं तु क्रुद्धमभिप्रेक्ष्य ब्रह्मवध्याभयान्नदी ।
अपोवाह वसिष्ठं तु प्राचीं दिशमतन्द्रिता ॥
उभयोः कुर्वती वाक्यं
वञ्चयित्वा च गाधिजम् ।
ततोपवाहितं दृष्ट्वा
वसिष्ठमृषिसत्तमम् ॥ ३७
अब्रवीद्दुःखसंक्रुद्धो विश्वामित्रो ह्यमर्षणः ।
यस्मान्मां त्वं सरिच्छ्रेष्ठे वञ्चयित्वा पुनर्गता
शोणितं वह कल्याणि रक्षोग्रामणिसंमतम् ।
ततः सरस्वती शप्ता विश्वामित्रेण धीमता ॥
अवहच्छोणितोन्मिश्रं तोयं संवत्सरं तदा ।
अथर्षयश्च देवाश्च गन्धर्वाप्सरसस्तदा ॥ ४०
सरस्वतीं तथा दृष्ट्वा बभूवुर्भृशदुःखिताः ।
एवं वसिष्ठापवाहो लोके ख्यातो जनाधिप॥
आगच्छच्च पुनर्मार्गं स्वमेव सरितां वरा॥ ४१

इति श्रीमहाभारते शल्यपर्वान्तर्गतगदापर्वणि बलदेवतीर्थयात्रायां सारस्वतोपाख्याने द्विचत्वारिंशोऽध्यायः ॥ ४२ ॥

## ४३

वैशम्पायन उवाच ।
सा शप्ता तेन क्रुद्धेन विश्वामित्रेण धीमता । तस्मिंस्तीर्थवरे शुभ्रे शोणितं समुपावहत् ॥ १

---

वयं ऋषयः त्वत्तोऽधीमहि वेदान् कदाचिदनावृष्ट्या मृतेषु ऋषिषु संप्रदायोच्छेदे सतीति भावः ॥ ३१ ॥ रक्षोग्रामणिसंमतमित्यत्र ह्रस्वत्वमार्षम् ॥ ३९ ॥ इति श्रीमहाभारते शल्यान्तर्गतगदापर्वणि नैलकण्ठीये भारतभावदीपे द्विचत्वारिंशोऽध्यायः ॥ ४२ ॥

४३

सा शप्तेति ॥ १ ॥

अथाजग्मुस्ततो राजन् राक्षसास्तत्र भारत
तत्र ते शोणितं सर्वे पिबन्तः सुखमासते ॥ २
तृप्ताश्च सुभृशं तेन सुखिता विगतज्वराः ।
नृत्यन्तश्च हसन्तश्च यथा स्वर्गजितस्तथा ॥ ३
कस्यचित्त्वथ कालस्य ऋषयः सुतपोधनाः
तीर्थयात्रां समाजग्मुः सरस्वत्यां महीपते॥ ४
तेषु सर्वेषु तीर्थेषु स्वाप्लुत्य मुनिपुङ्गवाः ।
प्राप्य प्रीतिं परांचापि तपोलुब्धा विशारदाः
प्रययुर्हि ततो राजन् येन तीर्थमसृग्वहम् ।
अथागम्य महाभागास्तत्तीर्थं दारुणं तदा ॥ ६
दृष्ट्वा तोयं सरस्वत्याः शोणितेन परिप्लुतम् ।
पीयमानं च रक्षोभिर्बहुभिर्नृपसत्तम ॥ ७
तान्दृष्ट्वा राक्षसान् राजन्मुनयः संशितव्रताः
परित्राणे सरस्वत्याः परं यत्नं प्रचक्रिरे ॥ ८
ते तु सर्वे महाभागाः समागम्य महाव्रताः ।
आहूय सरितां श्रेष्ठामिदं वचनमब्रुवन् ॥ ९
कारणं ब्रूहि कल्याणि किमर्थं ते ह्रदो ह्ययम्
एवमाकुलतां यातः श्रुत्वाऽध्यास्यामहे वयम्
ततः सा सर्वमाचष्ट यथावृत्तं प्रवेपती ।
दुःखितामथ तां दृष्ट्वा ऊचुस्ते वै तपोधनाः ॥
कारणं श्रुतमस्माभिः शापश्चैव श्रुतोऽनघे ।
करिष्यन्ति तु यत्प्राप्तं सर्व एव तपोधनाः१२
एवमुक्त्वा सरिच्छ्रेष्ठामूचुस्तेऽथ परस्परम् ।
विमोचयामहे सर्वे शापादेतां सरस्वतीम्१३
ते सर्वे ब्राह्मणा राजंस्तपोभिर्नियमैस्तथा ।
उपवासैश्च विविधैर्यमैः कष्टव्रतैस्तथा ॥ १४
आराध्य पशुभर्तारं महादेवं जगत्पतिम् ।
मोक्षयामासुस्तां देवीं सरिच्छ्रेष्ठां सरस्वतीम्
तेषां तु सा प्रभावेण प्रकृतिस्था सरस्वती।
प्रसन्नसलिला जज्ञे यथापूर्वं तथैव हि ॥ १६
निर्मुक्ता च सरिच्छ्रेष्ठा विबभौ सा यथा पुरा
दृष्ट्वा तोयं सरस्वत्या मुनिभिस्तैस्तथा कृतम्
तानेव शरणं जग्मू
राक्षसाः क्षुधितास्तथा।
कृत्वाञ्जलिं ततो राजन्
राक्षसाः क्षुधयाऽर्दिताः ॥ १८
ऊचुस्तान्वै मुनीन्सर्वान् कृपायुक्तान्पुनः पुनः
वयं च क्षुधिताश्चैव धर्माद्धीनाश्च शाश्वतात्
न च नः कामकारोऽयं यद्वयं पापकारिणः ।

युष्माकं चाप्रसादेन दुष्कृतेन च कर्मणा २०
यत्पापं वर्धतेऽस्माकं यतः स्मो ब्रह्मराक्षसाः
योषितां चैव पापेन योनिदोषकृतेन च॥ २१
एवं हि वैश्यशूद्राणां क्षत्रियाणां तथैव च ।
ये ब्राह्मणान्प्रद्विषन्ति ते भवन्तीह राक्षसाः
आचार्यमृत्विजं चैव गुरुं वृद्धजनं तथा ।
प्राणिनो येऽवमन्यन्ते ते भवन्तीह राक्षसाः
तत्कुरुध्वमिहास्माकं तारणं द्विजसत्तमाः ।
शक्ता भवन्तः सर्वेषां लोकानामपि तारणे॥
तेषां तु वचनं श्रुत्वा तुष्टुवुस्तां महानदीम् ।
मोक्षार्थं रक्षसां तेषामूचुः प्रयतमानसाः २५
क्षुतं कीटावपन्नं च यच्चोच्छिष्टाचितं भवेत्।
सकेशमवधूतं च रुदितोपहतं च यत् ॥ २६
एभिः संसृष्टमन्नं च
भागोऽसौ रक्षसामिह।
तस्माज्ज्ञात्वा सदा विद्वा-
नेतान्यत्नाद्विवर्जयेत् ॥ २७
राक्षसान्नमसौ भुंक्ते यो भुंक्ते ह्यन्नमीदृशम् ।
शोधयित्वा ततस्तीर्थमृषयस्ते तपोधनाः २८
मोक्षार्थं राक्षसानां च नदीं तां प्रत्यचोदयन्
महर्षीणां मतं ज्ञात्वा ततः सा सरितां वरा
अरुणामानयामास
स्वां तनूं पुरुषर्षभ ।
तस्यां ते राक्षसाः स्नात्वा
तनूस्त्यक्त्वा दिवं गताः ॥ ३०
अरुणायां महाराज ब्रह्मवध्यापहा हि सा ।
एतमर्थमभिज्ञाय देवराजः शतक्रतुः ॥ ३१
तस्मिंस्तीर्थे वरे स्नात्वा
विमुक्तः पाप्मना किल
जनमेजय उवाच ।
किमर्थं भगवान् शक्रो
ब्रह्मवध्यामवाप्तवान् ॥ ३२
कथमस्मिंश्च तीर्थे वै
आप्लुत्याकल्मषोऽभवत् ।
वैशम्पायन उवाच ।
शृणुष्वैतदुपाख्यानं
यथा वृत्तं जनेश्वर ॥ ३३
यथा बिभेद समयं नमुचेर्वासवः पुरा ।
नमुचिर्वासवाद्भीतः सूर्यरश्मिं समाविशत्॥

अध्यास्यामहे अध्यवसायं करिष्यामहे ॥ १० ॥

तेनेन्द्रः सख्यमकरोत्समयं चेदमब्रवीत्।
न चार्द्रेण न शुष्केण न रात्रौ नापि चाहनि
वधिष्याम्यसुरश्रेष्ठ सखे सत्येन ते शपे।
एवं स कृत्वा समयं दृष्ट्वा नीहारमीश्वरः ३६
चिच्छेदास्य शिरो राजन्नपां फेनेन वासवः
तच्छिरो नमुचेश्छिन्नं पृष्ठतः शक्रमन्वियात्
भो भो मित्रहन्पापेति ब्रुवाणं शक्रमन्तिकात्
एवं स शिरसा तेन चोद्यमानः पुनः पुनः ३८
पितामहाय सन्तप्त एतमर्थं न्यवेदयत्।
तमब्रवील्लोकगुरुररुणायां यथाविधि ॥ ३९
इष्ट्वोपस्पृश देवेन्द्र तीर्थे पापभयापहे।
एषा पुण्यजला शक्र कृता मुनिभिरेव तु॥४०
निगूढमस्यागमनमिहासीत्पूर्वमेव तु।
ततोऽभ्येत्यारुणां देवीं प्लावयामास वारिणा
सरस्वत्यारुणायाश्च पुण्योऽयं संगमो महान्।
इह त्वं यज देवेन्द्र दद दानान्यनेकशः ॥४२
अत्राप्लुत्य सुघोरात्त्वं पातकाद्विप्रमोक्ष्यसे।
इत्युक्तः स सरस्वत्याः कुञ्जे वै जनमेजय॥४३
इष्ट्वा यथावद्बलभिदरुणायामुपास्पृशत्।
स मुक्तः पाप्मना तेन ब्रह्मवध्याकृतेन च॥४४
जगाम संहृष्टमनास्त्रिदिवं त्रिदशेश्वरः।
शिरस्तच्चाप नमुचेस्तत्रैवाप्लुत्य भारत।
लोकान्कामदुघान्प्राप्तमक्षयान् राजसत्तम

वैशम्पायन उवाच

तत्राप्युपस्पृश्य बलो महात्मा
दत्वा च दानानि पृथग्विधानि।
अवाप्य धर्मं परमार्थकर्मा
जगाम सोमस्य महत्सुतीर्थम् ॥ ४६
यत्रायजद्राजसूयेन सोमः
साक्षात्पुरा विधिवत्पार्थिवेन्द्रः।
अत्रिर्धीमान्विप्रमुख्यो बभूव
होता यस्मिन् क्रतुमुख्ये महात्मा॥४७
यस्यान्तेऽभूत्सुमहद्दानवानां
दैतेयानां राक्षसानां च देवैः।
यस्मिन् युद्धं तारकाख्यं सुतीव्रं
यत्र स्कन्दस्तारकाख्यं जघान ॥ ४८
सैनापत्यं लब्धवान् देवतानां
महासेनो यत्र दैत्यान्तकर्ता।
साक्षाच्चैवं न्यवसत्कार्तिकेयः
सदा कुमारो यत्र स प्लक्षराजः॥४९

इति श्रीमहाभारते शल्यपर्वान्तर्गतगदापर्वणि बलदेवतीर्थयात्रायां सारस्वतोपाख्याने त्रिचत्वारिंशोऽध्यायः ॥ ४३ ॥

## ४४

जनमेजय उवाच।

सरस्वत्याः प्रभावोऽयमुक्तस्ते द्विजसत्तम।
कुमारस्याभिषेकं तु ब्रह्मन् व्याख्यातुमर्हसि॥
यस्मिन्देशे च काले च यथा च वदतां वर।
यैश्चाभिषिक्तो भगवान्विधिना येन च प्रभुः २
स्कन्दो यथा च दैत्यानामकरोत्कदनं महत्।
तथा मे सर्वमाचक्ष्व परं कौतूहलं हि मे ॥३

वैशंपायन उवाच।

कुरुवंशस्य सदृशं कौतूहलमिदं तव।
हर्षमुत्पादयत्येव वचो मे जनमेजय ॥ ४
हन्त ते कथयिष्यामि शृण्वानस्य नराधिप।
अभिषेकं कुमारस्य प्रभावं च महात्मनः ॥५
तेजो माहेश्वरं स्कन्नमग्नौ प्रपतितं पुरा।
तत्सर्वभक्षो भगवान्नाशकद्दग्धुमक्षयम् ॥६
तेनासीदतितेजस्वी दीप्तिमान् हव्यवाहनः।
न चैव धारयामास गर्भं तेजोमयं तदा ॥ ७
स गङ्गामभिसंगम्य नियोगाद्ब्रह्मणः प्रभुः।
गर्भमाहितवान् दिव्यं भास्करोपमतेजसम्८
अथ गङ्गापि तं गर्भमसहन्ती विधारणे।
उत्ससर्ज गिरौ रम्ये हिमवत्यमरार्चिते ॥९
स तत्र ववृधे लोकानावृत्य ज्वलनात्मजः।
ददृशुर्ज्वलनाकारं तं गर्भमथ कृत्तिकाः ॥१०
शरस्तम्बे महात्मानमनलात्मजमीश्वरम्।
ममायमिति ताः सर्वाः पुत्रार्थिन्योऽभिचुक्रुशुः

इति श्रीमहाभारते शल्यान्तर्गतगदापर्वणि नैलकण्ठीये भारतभावदीपे त्रिचत्वारिंशोऽध्यायः ॥ ४३ ॥

४४

सरस्वत्या इति ॥ १ ॥

तासां विदित्वा भावं तं मातॄणां भगवान्प्रभुः
प्रस्नुतानां पयः षड्भिर्वदनैरपिबत्तदा ॥ १२
तं प्रभावं समालक्ष्य तस्य बालस्य कृत्तिकाः
परं विस्मयमापन्ना देव्यो दिव्यवपुर्धराः ॥
यत्रोत्सृष्टः स भगवान् गङ्गया गिरिमूर्धनि ।
स शैलः काञ्चनः सर्वः संबभौ कुरुसत्तम ॥ १४
वर्धता चैव गर्भेण पृथिवी तेन रञ्जिता ।
अतश्च सर्वे संवृत्ता गिरयः काञ्चनाकराः ॥
कुमारः सुमहावीर्यः कार्तिकेय इति स्मृतः ।
गाङ्गेयः पूर्वमभवन्महायोगबलान्वितः ॥ १६
शमेन तपसा चैव वीर्येण च समन्वितः ।
ववृधेऽतीव राजेन्द्र चन्द्रवत्प्रियदर्शनः ॥१७
स तस्मिन्काञ्चने दिव्ये शरस्तम्बे श्रिया वृतः
स्तूयमानः सदा शेते गन्धर्वैर्मुनिभिस्तथा ॥
तथैनमन्वनृत्यन्त देवकन्याः सहस्रशः ।
दिव्यवादित्रनृत्यज्ञाः स्तुवन्त्यश्चारुदर्शनाः ॥
अन्वास्ते च नदी देवं गङ्गा वै सरितां वरा ।
दधार पृथिवी चैनं बिभ्रती रूपमुत्तमम् ॥२०
जातकर्मादिकास्तत्र क्रियाश्चक्रे बृहस्पतिः ।
वेदश्चैनं चतुर्मूर्तिरुपतस्थे कृताञ्जलिः ॥ २१
धनुर्वेदश्चतुष्पादः शस्त्रग्रामः ससंग्रहः ।
तत्रैनं समुपातिष्ठत्साक्षाद्वाणी च केवला ॥
स ददर्श महावीर्यं देवदेवमुमापतिम् ।
शैलपुत्र्या समासीनं भूतसंघशतैर्वृतम् ॥ २३
निकाया भूतसंघानां परमाद्भुतदर्शनाः ।
विकृता विकृताकारा विकृताभरणध्वजाः
व्याघ्रसिंहर्क्षवदना बिडालमकराननाः ।
वृषदंशमुखाश्चान्ये गजोष्ट्रवदनास्तथा ॥ २५
उलूकवदनाः केचिद्गृध्रगोमायुदर्शनाः ।
क्रौञ्चपारावतनिभैर्वदनै राङ्कवैरपि ॥ २६
श्वाविच्छल्यकगोधानामजैडकगवां तथा ।
सदृशानि वपूंष्यन्ये तत्र तत्र व्यधारयन् ॥
केचिच्छैलाम्बुदप्रख्याश्चक्रोद्यतगदायुधाः ।
केचिदञ्जनपुञ्जाभाः केचिच्छ्वेताचलप्रभाः ॥
सप्त मातृगणाश्चैव समाजग्मुर्विशांपते ।
साध्या विश्वेऽथ मरुतो वसवः पितरस्तथा ॥
रुद्रादित्यास्तथा सिद्धा
भुजगा दानवाः खगाः ।

ब्रह्मा स्वयंभूर्भगवान्
सपुत्रः सह विष्णुना ॥ ३०
शक्रस्तथाभ्ययाद्द्रष्टुं कुमारवरमच्युतम् ।
नारदप्रमुखाश्चापि देवगन्धर्वसत्तमाः ॥ ३१
देवर्षयश्च सिद्धाश्च बृहस्पतिपुरोगमाः ।
पितरो जगतः श्रेष्ठा देवानामपि देवताः ॥
तेऽपि तत्र समाजग्मुर्यामा धामाश्च सर्वशः
स तु बालोऽपि बलवान्महायोगबलान्वितः
अभ्याजगाम देवेशं शूलहस्तं पिनाकिनम् ।
तमाव्रजन्तमालक्ष्य शिवस्यासीन्मनोगतम् ॥
युगपच्छैलपुत्र्याश्च गङ्गायाः पावकस्य च ।
कं नु पूर्वमयं बालो गौरवादभ्युपैष्यति ॥
अपि मामिति सर्वेषां तेषामासीन्मनोगतम्
तेषामेतमभिप्रायं चतुर्णामुपलक्ष्य सः ॥ ३६
युगपद्योगमास्थाय ससर्ज विविधास्तनूः ।
ततोऽभवच्चतुर्मूर्तिः क्षणेन भगवान्प्रभुः ॥ ३७
तस्य शाखो विशाखश्च नैगमेयश्च पृष्ठतः ।
एवं स कृत्वा ह्यात्मानं चतुर्धा भगवान्प्रभुः
यतो रुद्रस्ततः स्कन्दो जगामाद्भुतदर्शनः ।
विशाखस्तु ययौ येन देवी गिरिवरात्मजा ॥
शाखो ययौ स भगवान् वायुमूर्तिर्विभावसुं
नैगमेयोऽगमद्गङ्गां कुमारः पावकप्रभः ॥ ४०
सर्वे भास्वरदेहास्ते चत्वारः समरूपिणः ।
तान्समभ्ययुरव्यग्रास्तदद्भुतमिवाभवत् ॥ ४१
हाहाकारो महानासीद्देवदानवरक्षसाम् ।
तद्दृष्ट्वा महदाश्चर्यमद्भुतं लोमहर्षणम् ॥ ४२
ततो रुद्रश्च देवी च पावकश्च पितामहम् ।
गङ्गया सहिताः सर्वे प्रणिपेतुर्जगत्पतिम् ॥ ४३
प्रणिपत्य ततस्ते तु विधिवद्राजपुङ्गव ।
इदमूचुर्वचो राजन् कार्तिकेयप्रियेप्सया ॥ ४४
अस्य बालस्य भगवन्नाधिपत्यं यथेप्सितम् ।
अस्मत्प्रियार्थं देवेश सदृशं दातुमर्हसि ॥ ४५
ततः स भगवान् धीमान् सर्वलोकपितामहः
मनसा चिन्तयामास किमयं लभतामिति ॥
ऐश्वर्याणि च सर्वाणि देवगन्धर्वरक्षसाम् ।
भूतयक्षविहङ्गानां पन्नगानां च सर्वशः ॥ ४७
पूर्वमेवादिदेशासौ निकायेषु महात्मनाम् ।
समर्थं च तमैश्वर्ये महामतिरमन्यत ॥ ४८

बिडालवृषदंशौ मार्जारजातिभेदौ तत्सदृशाननौ ॥ २५ ॥ तस्य स्कन्दस्य पृष्ठतः पश्चात् शाखविशाखनैगमेयाः आसन् ते स्कन्देन सह चत्वारः ॥ ३८ ॥ अद्भुतमदृष्टपूर्वम् ॥ ४२ ॥

